अच्युतग्रन्थमालायाः षष्ठं पुष्पम्

# हरिभक्तिरसामृतसिन्धुः

पूज्यपाद श्री रूपगोस्वामिविनिमितः
पूज्यतम श्रीजीवगोस्वामिकृत
दुर्गमसङ्गमनीटीकयोपेतः

प्रकाशनस्थानम्

अच्युत ग्रन्थमाला—कार्यालयः, वाराणसी ।

अच्युतग्रन्थमालायाः षष्ठं पुष्पम् ।

# हरिभक्तिरसामृतसिन्धुः

पूज्यपाद श्री रूपगोस्वामिविनिर्मितः
पूज्यतम श्रीजीवगोस्वामिकृत
दुर्गमसङ्गमनीटीकयोपेतः



प्रकाशनस्थानम्
अच्युत ग्रन्थमाला-कार्यालयः, वाराणसी ।

द्वितीयावृत्तिः ११०० ]      संवत् २०३२      [ मूल्यम् १५)

## प्रथमसंस्करण-भूमिका



श्रीमद्‌हनुमद्‌भीममध्वान्तर्य्यामिरामकृष्णवेदव्यासात्मकसच्चिदानन्द-विग्रहपूर्णतमाह्लादिनीशक्त्यभिन्नीकृतस्वरूपप्रेमावतारभगवत्श्रीश्रीगौरकृष्णः शरणम्।

सौन्दर्य्ये कामकोटिः सकलजनसमाह्लादने चन्द्रकोटि-
र्वात्सल्ये मातृकोटिस्त्रिदशविटपितोऽप्यद्‌भुतौदार्य्यकोटिः।
गाम्भीर्य्येऽम्भोधिकोटिर्मधुरिमणि सुधाक्षीरमाध्वीककोटि-
र्गौरो देवः स जीयात् प्रणयरसपदे दर्शिताश्चर्य्यकोटिः॥

इह किलानादिप्रवाहपरम्परया प्रवहमाणे प्रपञ्चे परीक्षकैः पटिमभिः परीक्षित-स्वरूपात्मपदार्थे तद्विशेषस्य चेश्वरस्य धर्म्मिग्राहकमानैः सर्वज्ञत्वादिविशिष्टस्य तत्त्व-विचारादद्वितीयस्य च प्रतिपन्नत्वेऽपि ब्रह्मातायां ज्योतीरूपतयैतस्यामूर्त्ततां भगवत्तायां च ज्योतिष्मत्त्वेन मूर्त्ततां प्राकृतगुणराहित्येन निर्विशेषतामप्राकृतानन्तकल्याणगुणधाम-तया च सविशेषतां संगिरमाणास्तावदुपनिषदादयः सत्तर्कोपोद्‌बलिता विजयन्तेतमा-मित्यतिरोहितमेव निरपेक्षशास्त्रमार्मिकाणाम्।

एवं हि करुणावशंवदत्वेनानितरसाध्यप्रयोजनसंपिपादयिषया तत्तद्‌गुणोपबृंहित-मायोपधानेन हिरण्यगर्भादिसंज्ञास्तथा चिकीर्षितोपयुक्तस्वैश्वर्य्यप्रकाशतारतम्यतश्च विलासाद्याख्याः, त्रिपादविभूतितः पादविभूताविर्भावात्मकावतारविभेदान् समय-घटितनियमाक्रान्तविधित्सया युगमन्वन्तराद्याविर्भू तीश्चासादयतो यथोपयोगं स्वांशशक्तिकलाः संचार्य्य, योग्यविधेयानाविष्कृत्य, क्वापि चैष्वाविश्य, च जगदुद्धारै-कव्रतस्यैश्वर्य्योपस्कृतानन्तमाधुर्य्यप्राकट्यानुसारेण पूर्णपूर्णतरपूर्णतमताश्चाधिकारिप्रप-त्त्यनुरोधानुबन्धेन प्रकाशयतोऽस्योपासनामन्तरेण नतरां यावत्तापमात्रनिवृत्तिः स्वा-परोक्ष्यं वास्तवस्वरूपानन्दानुभूतिर्वेति निखिलनिगमादिदुन्दुभिघोषः।

प्रत्यपादि चायमर्थः—"तरति शोकमात्मविद्" इत्यादिश्रुतिभिः;

"दैवी ह्येषा गुणमयी मम माया दुरत्यया।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते॥" इत्यादिस्मृतिभिश्च।

असूचिषत च भङ्‌ग्या प्रपदनीयत्वेन सच्चिदानन्दविग्रहो भगवान्, प्रपत्तृत्वेन जीवाः, प्रपत्त्या तरणीयत्वेन माया च।

सुव्याञ्जिषत च सर्वस्थितिप्रयोजकतावच्छेदकतया सर्वप्रकाशतावच्छेदकतया सर्वमुख्यप्राप्यतावच्छेदकतया च सिद्धाः क्रमेण संधिनीसंवित्तिह्लादिनीशक्तयः स्वाश्र-यतादात्म्यभाजः। यासु किलान्तिमाया वृत्तिविशेषो भक्तिः फलात्मकप्रीत्यादिरूपा।

ससाधनामेनां वर्णयितुमेवैष श्रीभक्तिरसामृतसिन्धुनामा निबन्धो न्यबन्धि द्रुतचित्ताधिकारिकृते ।

इदमत्राकूतम्-अनादिवासनावशाद् द्रुताद्रुतचित्तशालितया द्विविधेषु जनेष्वधिकारिभेदेन प्रपत्तिपद्धतिरपि द्वैविध्यमश्नुते ।

तत्राद्रुतचेतसस्तावदद्वैततत्त्वचिन्तयाऽद्वैते संभूय शोकं तरन्ति । अपरे पुनः रुचिपरतन्त्रा भक्त्या द्रुतचित्ता द्रवप्रयोजकसत्त्वप्राधान्यात्तदानीमुद्भूतसात्त्विकप्रकाशवृत्तिप्रतिबिम्बोद्ग्राहिण्याममप्राकृत्यां ह्लादिनीदीधितौ वस्तुतो रतिपदवाच्यायां विषयवैचित्र्याद् नानाविधाभिः स्वदमानायां मुख्यस्थायित्वेन व्यपदेश्यायां मुख्यरसस्वरूपताविर्भावस्वरूपयोग्यताशालिन्यां फलात्मिकायां भक्तावायतन्ते ।

अत एव रसानां मुख्यत्वे पाञ्चविध्यमेव फलति । हास्यादीनां सप्तानां स्थायिषु रतेरुपस्कारकत्वेनाप्राधान्याद् हासादीनामेवाङ्गित्वाद् रसत्वं भवति, किन्तु गौणम् , हासादीनां चित्तधर्माणां प्राकृतत्वेन रसजातीयताविरहाद् । एतेन मुन्यननुमोदितत्वभ्रान्त्या वितथं तथयितुकामाः पराकृताः । रसदर्शनप्रस्थानैदम्पर्य्यप्रापणाय खल्वयमेव घण्टापथः ।

एवं चात्रेत्थं प्रणाडी पर्यवस्यति—

तत्रादौ नित्यकर्मानुष्ठानाद् विशुद्धान्तःकरणे वैराग्योपोद्बलिते चेतस्यद्रुतचित्तानां तत्त्वज्ञानोदयान्मुक्त्यधिगमः । यद्वा श्रवणादिसाधनसाहायकाद् द्रुते चेतसि रुच्यादिक्रमेण भगवति प्रेमोदयः । इत्थमधिकारिभेदेन व्यवस्था निर्धारिता शास्त्रैः ।

एवं चाद्रुतचित्तानां वर्त्मान्यन्यत्र प्रदर्श्य, द्रुतचित्तानामेनत्प्रदिदर्शयिषवो विपश्चिदग्रेसराः सिद्धदेहा महाकवयो भावुकमूर्धन्याः श्रीरूपगोस्वामिचरणाः प्रकृतग्रन्थं निबिभन्त्सवः संदर्भसौकर्य्यायात्र सिन्धवारोपस्वारस्यात् पूर्वदक्षिणपश्चिमोत्तरात्मनि विभागचतुष्टयेऽभिमते प्रथमे सामान्यसाधनभावप्रेमलक्षणा भक्तीर्लहरीचतुष्केणोपपाद्य, द्वितीयस्मिन् रसनीयतौपयिकान् विभावानुभावसात्त्विकसंचारिस्थायिनः पञ्चलहरीभिः क्रमेण प्रदर्श्य, तृतीये च शान्तप्रीतप्रेयोवत्सलमधुराख्यान् पञ्च मुख्यरसान् तत्तल्लहरीभिस्तथैवोपपाद्य, शेषे तु सप्त गौणरसान् हास्याद्भुतवीरकरुणरौद्रभयानकबीभत्सान् रसानां मिथोविरोधाविरोधं तदाभासांश्च क्रमेण लहरीनवकेनोपवर्ण्य, साकल्येन सपरिकरं भक्तिरसं व्यवातिष्ठिपन् ।

अस्मिन्निबन्धे प्रधानतयोपपाद्यस्य भक्तिरसस्य संक्षेपतस्तत्त्वमवजिगमिषूणामुत्कण्ठाविनोदायैतत्सम्बद्धावश्यज्ञेयसंकलनस्य प्रतुष्टूषया किंचिदुपक्रम्यते—

इह तावद् रससंबद्धाः प्रश्नाः संक्षेपतश्चत्वारः समापतन्ति—रसः किंप्रमाणकः ? किंप्रयोजनः ? किंस्वरूपः ? कथं चोपलब्धव्यः ? इति ।

तत्र—

"मानाधीना मेयसिद्धिर्मानसिद्धिश्च लक्षणाद्"—

इत्यभियुक्तोक्तदिशा रसो येन प्रमित्सितव्यस्तदीये हि स्वरूपे यथार्थज्ञानसाधनत्वात्मके फलतः सर्वसिद्धान्तरीत्या पर्यवसिते तत्संख्यायां तैर्थिकानां सगोत्र-

कलहस्यानपेक्षणीयत्वेनोत्थापनानर्हत्वात् प्रकृताचार्यानुमोदितानामेव प्रमाणानामुपगन्तव्यतायां रसप्रस्थानिभिराचार्यैः प्रत्यक्षानुमानागमा एव प्रमाणत्वेनोपेयन्त इति वक्तुं युज्यते ।

यद्यपि प्रमेयविशेषनिरूपणप्रवणतावशंवदेन शास्त्रकारेण "परमतमप्रतिषिद्धमनुमतं भवति" इति नयमनुसृत्य प्रकृतविषयकसर्वोक्तित्रातस्यानुसर्त्तव्यताप्रसक्तावपि रसनादाभिन्नतानिबन्धनसमानतन्त्रसिद्धान्तादरेण संगीतशास्त्रोदितत्वप्रयुक्तं रसप्रत्यायनधूर्वहतयाऽव्याहतव्यञ्जनायां यदुपज्ञताऽस्ति तेषां वैयाकरणानां राद्धान्ते महाभाष्यकारादिभिर्व्यवहृतत्वायत्तं चरमोपेयतया पारमार्थिकस्वरूपप्रदर्शनपरायणानां महर्षिशाण्डिल्यादीनां सूत्राक्षरतो वा लब्धं त्रैविध्यमुक्तनिष्ठमेवेति प्रकृते निर्दिष्टा प्रमाणत्रय्येवेहानुमुद्यत इति पक्षः शक्यस्वीकरणः ।

परेषामत्रैवान्तर्भावादेतत्त्रिकेणैव रसः प्रमातव्यः । यद्यपि रसस्य प्रकाशाभिन्नतया नापरेण प्रकाश्यतापेक्षा तथापि कथमपेक्षेत्यादिकमुपरिष्टान्निपुणतरमुपपादनीयम् ।

तत्र प्रत्यक्षं तावन्नास्यदर्शिनां सहृदयानामानुभविकमेवेति नेह किमपि विवक्षणीयम् । अनुमानमपि पक्षीकृतात्मनि "आत्मनस्तु कामाय" इत्यादिभिः श्रुतिभगवतीभिः प्रमापितेन निरतिशयप्रेमास्पदत्वेन हेतुना खल्वानन्दात्मकत्वसाधकतया स्वभ्युपगममेव, निरतिशयानन्दस्य रसात्मकतयात्मनश्च रसाभिन्नतया तदभिन्नाभिन्नस्य तदात्मकताया औत्सर्गिकत्वादिकमपि स्वरूपविवेचने प्रतिपिपादयिष्यमाणम् । आगमस्तु "रसो वै सः" इत्यादिरपि किलोपक्रमोपसंहारादिभिर्निर्णीततत्परताको नैव तिरोहित इति प्रमाणसिद्धे रसतत्त्वे न काचिद् विमतिः । ततश्च निरतिशयानन्दसाक्षात्कार एव प्रयोजनत्वेनावधार्य्यतेऽत्रेत्यास्माकीनः समयः ।

प्रयोजने चेदमीये निश्चिकीर्षितव्येऽयमेव प्रयोजनात्मेति सिद्धान्तः । तथा हि—प्रयोजनं हि फलम्, तच्च मुख्यगौणरूपतया द्विविधम्, फलान्तरेच्छाधीनेच्छाविषयत्वं गौणत्वम्, तदनधीनेच्छास्पदत्वं तु मुख्यत्वम्, तत्त्व च सुख एव विश्राम्यतीत्यत्र नैव विवादो विश्वजनीनानुभवसिद्धत्वात् ।

यद्यपि लोके सुखत्वेन व्यवह्रियमाणं न वस्तुतः सुखम्, विनाशित्वेन दुःखाधायकत्वाद् । यदाहुर्महर्षिपतञ्जलिपादाः—"परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च सर्वमेव दुःखं विवेकिनः ।" अत एव दुःखमिश्रितत्वेन सुखस्यापि मधुसंपृक्तगरलवद्धेयत्वात्तदपि दिध्वंसयिषितव्यमेवेति महर्षिगोतमपादा व्यवातिष्ठिपन् । तथापि वास्तविकसुखमलभमानाः संसारिणस्तदाभासेनैव कृतकृत्यंमन्यमानाः समवलोक्यन्ते ।

वस्तुतः सुखं च "आनन्दं ब्रह्मणो विद्वान्", "तस्यैवानन्दस्याऽन्ये मात्रामुपजीवन्ति" इत्यादिभिर्भगवतीभिः श्रुतिभिरेवावगमितम्, तच्चात्मस्वरूपघटकतया परिणामादिदुःखकालुष्यासंपृक्तमित्यात्मस्वरूपावगत्या स्ववगममौपनिषदप्रस्थानाध्वनीनैः, अत एवेदं विविच्यमानं रसतत्त्वं साहित्यदर्शनपरमजीवातुरूपात्मस्वरूपोपजीव्यतयाश्रित्य चतुर्मुखादिभरतमुन्यन्ताचार्याणामार्षप्रमाणोपबृंहितं रसशास्त्रत्वेन व्यपदेश्यं न दर्शनान्तरैर्गतार्थमाशङ्कितव्यम् ।

दर्शनान्तरेषु किल लौकायतिकसौगतानामात्मनः शाश्वतिकतैव दुर्लभेति निर्दिष्टदूषणं जागरूकमेव। विवसनसमये कथमपि नित्यत्वेऽपि तस्यानन्दता शशविषाणायमानैव।

नैयायिकवैशेषिकाणां मते तन्नित्यत्वेऽपि निरानन्दतैवैतस्य स्वरूपम्, सानन्दता तु दुःखवत्तावृतैवेति न सिषाधयिषितसिद्धिः। कापिलपातञ्जलानामपि तथात्वेन तथात्वमेवेति नाभीष्टपूर्तिः।

अध्वरमीमांसाविदां नयेषु प्रायेणोक्तचर्य्यैवाशान्तिः कचिन्मुक्तौ नित्यसुखाभिव्यक्त्यभ्युपगमेऽपि दुर्निवारार्थान्तरता, मुक्तितः पूर्वं तदीयव्यक्तेरसत्कल्पत्वाद्।

अनयैव दिशाऽऽत्मनोऽनानन्दितावादिनामवशिष्टदर्शनानां सिद्धान्तेभ्योऽप्यगतार्थता विवेक्तव्या।

औपनिषदसिद्धान्तानां त्वद्वैतविशिष्टाद्वैतशुद्धाद्वैतद्वैताद्वैतद्वैतवादिनां पञ्चानामपि प्रस्थानेषु चात्मतत्त्वस्य नित्यतयाऽऽनन्दतया च महतः संवादस्य सत्त्वेऽपि न तथाऽऽनुकूल्यं यादृशप्रयोजनसंपिपादयिषयाऽऽचार्य्या रसशास्त्रमुपनिबिभन्तस्व एनदाविरबीभवन्, एतच्चानुपदमेव स्वरूपनिर्णये वक्ष्यते।

रसस्वरूपजिज्ञासायां तावदात्मैव रस इति रसदर्शनिनां राद्धान्तः, "रसो वै सः", "आनन्दं ब्रह्मणो विद्वान्", "आनन्दाद्ध्येवेमानि" इति श्रौतवचनानि स्वरूपतटस्थलक्षणाभ्यामात्मानमेव लक्षयन्ति, आत्मा चात्र यद्यपि ब्रह्मपरमात्मादिपर्यायो भगवानेवोपक्रमोपसंहारादिभिस्तात्पर्यास्पदतयाऽवजिगमिषितस्तथापि प्रतिबिम्बतया परिच्छिन्नतया वस्तुतया वा "यथाऽग्नेर्विस्फुलिङ्गाः", "ममैवांशो जीवलोके", "अंशो नानाव्यपदेशाद्" इत्यादिश्रुतिस्मृतिब्रह्मसूत्रादिभिर्व्यवस्थापितो जीवोऽपि तत्त्वदृशा सच्चिदानन्दात्मा,परन्तु सिन्धोर्बिन्दुरिव तत्स्वभावः कणकल्पः सुतरां तदुपात्तसरणितः सर्वांश एव न तादृशो, नातो जगत्कर्तृत्वाद्यापत्तिरपि चैनं तर्कोपष्टब्धानि "जगद्व्यापारवर्जम्" इत्यादिप्रमाणान्युपोद्बलयन्ति। अत एवायं तदीयतटस्थशक्त्यात्मकतया शास्त्रेषु व्यवह्रियते।

सच्चिदानन्दरूपस्य भगवतः किल तिस्रः शक्तयः शास्त्रप्रमिताः स्वरूपातटस्थाबहिरङ्गास्तासां स्वरूपाख्यायां पुनस्तावत्यो भिदाः संधिनीसंविद्ह्लादिनीनामिकाः, तथा च तत्त्वतो भगवत्स्वरूपसजातीयः सर्वथा तद्विजातीयबहिरङ्गातो विलक्षणः सन् जीवः तटस्थ इति गीयते। एवं चोक्तस्वरूपो जीवोऽपि रसपदवाच्यतां नार्हतीति न, न खलु रससमुद्रस्य बिन्दू रसान्यो भवितुमर्हति। एतदेवाभिप्रेत्य रसशास्त्राचार्य्याः प्राकृताप्राकृतभेदतो द्वैविध्यं रसस्य संगिरमाणास्तथैवोपापीदन्। मूलं चैतदीयमाग्नेयपुराणादिषु व्यक्तमेव। आचार्यभरतमुनिना तु यानुपचिकीर्षुणा न्यबन्धि नाट्यशास्त्रं ते किलानादिकालतो बम्भ्रम्यमाणप्रपञ्चचक्रचङ्क्रमणताचणा अपरिशीलितचरपरमपुमर्थप्रापकपद्धतयः सुकुमारमतयो द्विविधवासनावासितहृदयाः काव्यार्थचिन्तनालङ्कर्मीणयोग्यतापरिपचेलिमचातुरीका विनेयाः। तानेनान् "असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते"—

इत्यादिस्वरूपेण गुडजिह्विकान्यायेन चरमगन्तव्यदिक्संमुखीनीकर्तुकामेन परम-

रसास्वादमाधुरीसंपल्लेशोऽपि यदवधि नानुभवगोचरीकार्येत तदवधि कथमिवादसीयमर्म स्पृहयालवोऽमी क्रियेरन्निति विचिन्त्य दुष्करप्रवृत्त्यास्पदानि निःश्रेयसप्रापणपटूनि श्रवणादीनि साधनान्यव्यापार्यापि निखिलानर्थनिदानाज्ञानमनुंमूल्यापि चिरसंचितचरकर्मकलापानपरिप्लुष्यापि जनैर्यथा तादृशं वस्त्वास्वादपदवीं नीयेत यादृशं तत् तानि व्यापार्य्य, तदुन्मूल्य, तान् परिप्लुष्य सूरिभिस्तथा क्रियते, स प्रकारो दिव्यज्ञानमन्दरेण निगमपयोधीन् प्रमथ्य नाट्याम्नायपीयूषवपुराविरकारि। सुतरां प्रथमभूमिकारूढानामधिकारिणामुपकारः प्राकृतरसपरिचयेन यथा सुकरो न तथाऽप्राकृतरसज्ञापनेनेत्यधिकारानुरूपमुपदेष्टारः श्रद्धेयवचनाः फलेग्रहियत्नाश्च भवन्ति नापरथा। अतो मुनिनाऽस्यैव प्रबन्धो निर्बन्धेनाबन्धि नापरस्य, नैतावता स नास्त्येव नानुमत एव वेत्यवगन्तव्यम्। कथमन्यथाऽऽत्मदर्शनासाधनतायामस्य शास्त्रस्य दर्शनता कथं चोपक्रम एव चतुर्वर्गाप्तिप्रयोजकतोक्तिरस्य संगच्छेत। कथं च रसताऽपि जीवस्वरूपघटकानन्दस्य? रसत्वप्रतिपादिका हि भगवती श्रुतिरुपक्रमोपसंहारादिपरिचारकवृन्दसेविता खलु स्वेष्टमाप्नोति।

न च तत्सध्रीचीनश्रुतितात्पर्यविषयाभिन्नत्वाज्जीवस्य नोक्तापत्तिरिति वाच्यम्? तयोरभेदस्य याथातथ्यचिन्तायामुदस्यापि संप्रतिपन्नभेदकालेऽभेदोक्तेरनुपयुक्तत्वात्, प्रदर्शितविधया शास्त्रप्रवृत्त्युपजीव्यविरोधाच्च।

एतेन ज्ञानकाण्डेऽस्य रसकाण्डस्य गतार्थतया काण्डान्तरारम्भचर्चा मुधैवेति वदन्तो निरस्ताः, प्रयोजनपार्थक्यं हि प्रस्थानपार्थक्यं प्रयोजयति, तच्चैहिकमामुष्मिकं वा, उत्कृष्टमपकृष्टं वांऽशत इत्यन्यदेतद्।

इत्थं चैष रसः प्राकृतालम्बनकतया प्राकृत इति व्यवह्रियते, अप्राकृतालम्बनकोऽप्राकृत इति शास्त्रविदां मर्यादा व्यवहारासंकरार्थमादरणीयैव। द्वैविध्यं चैतदाचार्यभरतेनापि बहुशो ध्वनितमप्यनधिकार्यत्वेन नाभिहितम्। तदेव पुनराग्नेयादौ स्पष्टमुक्तम्। नेयता काऽपि क्षतिः।

यत्तु प्राकृताप्राकृतौ रसौ क्रमेण लौकिकालौकिकावित्युच्येते इति, तन्न समीचीनम्, उभयोरप्यलौकिकत्वाद्। न हि जातु लौकिको रसाऽध्यात्मविद्यानां प्रधानत्वेन प्रतिपाद्यो भवितुमर्हति। स हि तृतीयपुमर्थगृह्योऽन्यथा प्रस्थानभेदानुपपत्त्या बाभ्रव्यादिसंहितानामानर्थक्यमापतेदित्यादिर्भूयानुपप्लवः स्याद्। अलौकिकत्वं चैनयोर्लौकिकमर्यादाऽतिशायित्वात् दर्शयिष्यते चानुपदमेतत्। प्राकृतत्वं च पादविभूतिविलासविजृम्भितत्वम्। त्रिपाद्वैभवं चाप्राकृतमिति वस्तुस्थितिः। अत्र प्राकृतो रस उच्यते, अप्राकृतस्तु भाव-इति नाट्यशास्त्रीया परिभाषा।

वस्तुतस्त्वप्राकृतो भक्तिरस उच्यते-रसत्वव्यपदेशजीवातोस्तादृशानन्दात्मकताया उभयत्र सत्त्वादिति,

रसोपलब्धिप्रकारस्त्वेषः—वक्ष्यमाणस्वरूपकैर्विभावानुभावसात्त्विकसंचारिभिर्व्यक्तो व्यक्तिविषयीकृतः स्थाय्येव रसतां भजतेऽयमर्थस्तु यावद्रसदर्शनिभिरनुमोदितोऽपि स्थायिस्वरूपे तद्व्यक्तौ च प्रक्रियाभेदो मतभेदनिबन्धनोऽस्त्येव। तत्र-आहंकारिके चित्ते कारणविशेषोद्बुद्धसत्त्वे स्वेतरगुणावभिभूय प्रकाशमाने जातुचिदनुभूतरत्यादि-

स्थायिसंस्कारोऽप्युद्बुद्धीभूय प्रतीयमान उपचीयमानः पुष्यमाणोऽभिन्नायमाननेदिष्ठचिच्छक्त्याऽऽत्मीयत्वेन भुज्यमानो रसव्यपदेशभागिति कापिली प्रक्रिया। परन्त्वसौ जडत्वपरप्रकाश्यत्वप्राकृतत्वादिमत्त्वाद् भिन्नमेव वस्तु नास्माकीनो रसः। भौतिके चित्ते हेतुविशेषादुदितप्रदिम्नि मुद्रितो रत्यादिस्थाय्याकारः संस्कारः स्वोद्बोधकमहिमतिरस्कृतावृतिकचिद्विशिष्टो रस इत्यौपनिषदैकदेशिनां सरणिः।

अत्र पूर्वोक्तदोषासत्त्वेऽपि चितोऽङ्गत्वोक्त्या श्रुतिस्वारस्यभङ्गोऽस्त्येव। एतद्दोषं परिहर्तुकामैः कैश्चित् स्थाय्यवच्छिन्नभग्नावरणचिदेव रस उक्तः। किन्त्वेवमपि गौणत्वभानप्रयुक्तास्वारस्ये समाहितेऽप्यव्यवहितोत्तरवाक्यसहितवाक्यैकवाक्यतास्वारस्यभङ्गस्तदवस्थ एव। तद् वाक्यं च—"रसं ह्येवायं लब्ध्वाऽऽनन्दीभवति" इति। एतद्वाक्यघटकायंपदार्थकर्तृकलाभकर्मैव भवता रसत्वेन विवक्ष्यतेऽतः स्पष्ट एव स्वारस्यभङ्गो भग्नावरणचैतन्यस्यैवायंपदार्थतया कर्तृकर्मणोरभेदापत्तेः। न च सावरणस्यैवायंत्वेन कर्तृतयाऽनावरणस्य कर्मतयौपाधिकभेदेनाविरोधान्न स्वारस्यभङ्ग इति वाच्यम्, स्वप्रकाशवादे किलावरणभङ्गमन्तरेणेतरस्यानपेक्षणादावरणभङ्गादेवानन्दीभवनप्राप्तेः पूर्वांशवैयर्थ्यस्य वज्रलेपायितत्वाद्।

एतेन सावरणोऽयमनावरणं रसं लब्ध्वेत्यादिवाचोयुक्तयः प्रत्युक्ताः। सावरणोऽनावरणः सन्नित्यादिनैव भवदिष्टसिद्धेः, तस्मादखिलानि कण्टकितसंकीर्णवर्त्मान्युत्सृज्य परिष्कृतघण्टापथेन संचरिष्णूनां रसविदामेष सिद्धान्तः—सः = प्रकृतः, स्वरूपतटस्थलक्षणलक्षितो ब्रह्मपरमात्मपर्यायो भगवान् वै = निश्चयेन, रसः = रसपदार्थः तमेनं रसमेव = नापरं लब्ध्वा हि = यतः, अयं = स्वल्पानन्दो जीवः आनन्दीभवति प्रशस्तानन्दो भवतीति, इत्थमेवोक्तौ प्रकृतशास्त्रस्य दर्शनताऽपि परमपुमर्थप्रापकतया संगच्छते।

न चावरणभङ्गवैशिष्ट्येऽपि परमपुमर्थसंपादकत्वाक्षतिरिति वाच्यम्, तथा सत्युत्तरमीमांसयैव गतार्थतायां भवन्मते शास्त्रस्यानारम्भणीयताऽऽपत्तेः। न चेष्टापत्तिः, अन्यैर्भवदभिमतानारम्भणेऽपि तुल्ययुक्त्येष्टापत्तेः सुवचत्वाद्। न चोत्तरमीमांसायामपि प्रस्थानान्तरे कथंकारं रसशास्त्रारम्भणीयतानिर्वाह इति शङ्क्यम्, गुडजिह्विकान्यायेन तथोपेयप्रतिपत्त्यर्था इत्यादिपूर्वोक्तयुक्तेः सार्थक्यसंभवाद्, न चास्माभिरपि सार्थक्यमेवं सूपपादमिति वक्तव्यम्, अपारमार्थिकतापिशाचीभयादेवमुपगन्तुं भवतोऽसामर्थ्यात् प्रकृतशास्त्रकृदभिमतरसस्य भवन्मते चरमोपेयत्वाभावाच्च।

तथा च परमर्षिभरताचार्यसूत्रं "विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः" इति, अत्र विभावयन्ति = आविर्भावयन्ति = उद्बोधयन्ति प्रसुप्तस्थायिनमिति विभावा आलम्बनान्युद्दीपनानि च।

एवं च विषयतासंबन्धेन स्थायिविशिष्टमालम्बनम्, स्वोद्बोधजनकतासंबन्धेन स्थायिविशिष्टमुद्दीपनं स्थायिपोषकत्वे सत्यालम्बनचेष्टारूपोऽनुभावः, आलम्बनावच्छेदेनाविर्भूष्णुतिरोभूष्णुः स्थायिपोषकरूपो व्यभिचारीति विवेचनीयम्। सूत्रे पञ्चमी हेत्वर्था। हेतुत्वं तु कारकत्वज्ञापकत्वान्यतररूपम्। ज्ञापकत्वं च तद्विषयकज्ञानजनकज्ञानविषयत्वम्। ज्ञानं चात्र त्रिविधं प्रत्यक्षम्, अनुमितिः, शाब्दधीश्च। प्रत्यक्षं तु द्विविधं

—यथार्थमयथार्थं च। द्वितीयं पुनर्द्विधा दोषजन्यं भ्रमत्वेन प्रसिद्धम्, इच्छाजन्यम् आरोपत्वेन ख्यातम्।

एवं च—दमयन्त्यादिदर्शनजनलादिसमवेतरत्याद्युद्बोधस्य तत्कार्यकटाक्षादिसहचरितोत्कण्ठादीनां चानुकार्य्यनलादिनैव सम्बन्धात्तत्रैव रस उत्पन्नो नटे तु तत्तदनुकृत्या सादृश्यमूलकारोप इति भट्टलोल्लटादयः।

केचन नाट्यादिषु प्रकटविभावादिषु व्यञ्जनया नलादौ दमयन्त्यादिरतौ ज्ञातायां भावनादोषेण कल्पितनलत्वाद्यवच्छिन्ने स्वस्मिन् समुत्पन्नोऽनिर्वचनीयो दमयन्त्यादिविषयकरत्यादिरेव रस इति समगिरिषत।

अन्ये तु व्यञ्जनाऽनिर्वचनीयख्यात्यनुपगमाद् भावनादोषेणात्मनि नलाद्यभेदग्राही दमयन्त्यादिरतिमदभेदबोधो विषयासत्त्वेऽपि मानसो भ्रम एव स इत्यास्थिषत।

परे तु श्रीशङ्कुकानुयायिनः—नलत्वेन गृहीते नटात्मके पक्षेऽकृत्रिमत्वेन गृहीतैर्विभावादिहेतुभिर्नलादिगतरत्यादिरनुमीयमानो रस इत्युपागमन्।

अपरे च नाट्यादिना व्यक्तिविशेषवृत्तित्वनिरूपितत्वाभ्यां जनितेऽपि स्थायिज्ञाने भावनया तयोः प्रमोषाद् रतित्वादिनैव प्रतीतरत्यादेः स्ववृत्तिरत्यादिसाजात्येनानुभूतचररत्यादिसंस्कारोद्बोधे ज्ञानस्य स्वप्रकाशत्वेन सत्त्वोद्रेकेणानन्दरूपो रसः शब्दस्य भोगाख्यतृतीयव्यापारेण साक्षात् क्रियत इत्यभ्युपागुर्भट्टनायकानुवर्तिनः।

इत्थं स्वस्वशेमुषीविकाससाहायकमवलम्ब्य, पारमर्षसूत्रघटकसंयोगपञ्चमीनिष्पत्त्यर्थविविधतयाऽभियुक्ताः स्वस्वमतानुरूपेण रसतत्त्वं प्राचीकशन्, परन्तु मुनिसंमतरहस्यानाकलनाच्छास्त्रसिद्धान्तिनामननुमतान्येवाखिलान्येवोक्तमतानि तदनुसारीणि चानिर्दिष्टान्येकदेशिमतानि।

इमानि चाश्रद्धाबीजानि संक्षेपतः प्रधानानि—तत्र प्रथमे विप्रकृष्टत्वादलौकिकत्वात् काल्पनिकारोपविषयत्वादर्थान्तरता। द्वितीयस्मिन् विमतानिर्वचनीयत्वाद् भ्रमविषयत्वात्तथात्वम्। तृतीये भ्रमास्पदत्वम्। तुरीये भेदग्रहबाधात् कथमपि भेदग्रहेऽपि नलादौ भैम्यादिरतिग्रहस्य सामाजिकप्रवृत्त्यनौपयिकत्वात्। श्रव्यस्थले पक्षधर्मताज्ञानविरहाच्चाभिमतरसपरिपन्थिताऽनिवार्य्या। पञ्चमे तु प्रमाणागोचरस्य शब्दनिष्ठक्रमिकव्यापारत्रयस्यैवारुन्तुदतेति।

श्रीमदभिनवगुप्ताचार्यास्तु—विभावानुभावव्यभिचारिभिः संयोगाद् व्यञ्जनाद् रसस्य स्थाय्युपहितचिदानन्दात्मनः, निष्पत्तिः स्वरूपप्रकाश इति सूत्रार्थं सिद्धान्तयन्ति स्म। फलबलकल्प्येन विभावादीनां साधारणीकरणात्मना व्यापारेण सर्वथा हि विशेषांशप्रमोषात् सामाजिकात्मनि स्थायी व्यज्यमानो रसः दशमस्त्वमसीत्यादिरीतितः शब्दादप्यपरोक्षज्ञानाभ्युपगमान्न पारोक्ष्यप्रयुक्तमपि वैरस्यम्। उक्तालौकिकव्यापारमहिम्ना लौकिककारणकार्य्यभावाद् दुःखजनकतया क्लृप्तेभ्योऽपि सुखोत्पत्तेः सुरतक्षणवर्त्यधरदशनादाविवानुभविकत्वादन्तःकरणवृत्तित्वाच्चालौकिकत्वं निष्प्रत्यूहमेव। कार्यत्वज्ञाप्यत्वाभावाद् भूतवर्तमानभविष्यत्ववैधुर्यात् सविकल्पनिर्विकल्पकवेद्यत्वविरहाच्च तादृशत्वं सुवचम्, नित्यत्वानन्दत्वस्वप्रकाशादिकं त्वात्मत्वादेव निर्विवादमेव। उत्पादविनाशिकादाचित्कत्वादिव्यवहारोऽपि चर्वणानिबन्धनो भवितु-

मर्हति, इत्येव निष्कर्षं तत्रभवन्मम्मटभट्टाः समाद्रियन्ते स्म। अन्येऽपि रसशास्त्रनिबन्धारः प्रायेणैनामेव दिशमनुसस्रुः।

इयांस्तु विशेषः सर्वमप्येतद्दिग्दर्शनविधया विनेयोन्मुखीकरणाय भरताचार्य्येण प्राकृतरसनिरूपणव्याजेन प्रदर्शितं वास्तविकतयोद्देश्यभूतोऽप्राकृतरसस्तु श्रीभगवदालम्बनक एव तस्यैवाखिलशेषित्वेन चरमप्राप्ततया परमपुमर्थफलत्वेन चोपनिषत्स्मृतिपुराणादिषु व्यवस्थापितत्वेन निखिलशास्त्रदर्शनानां साक्षात्परम्परासाधारण्येन तन्निरूणौपयिकभूयःप्रकारानाश्रित्य तत्रैव पर्यवसानस्याखिलसंमतत्वाद्।

एवं च निसर्गतोऽलौकिके तस्मिन् यादृगलौकिकतासंपादनाय नाट्यादिषु तादृशानन्दानुगुणसाधारणीकरणोररीकरणमुपेयते तादृशत्वस्यौत्सर्गिकतयाऽऽनन्दव्यक्तिप्रयोजकत्वांशे फलानुपधानेऽपि परत्रोपयोगित्वेन नाप्रयोजकताऽत एव प्रकारभेदोन्नयनायाचार्य्यैरेव भक्तिरसनाम्ना व्यपदिश्यते। व्यतानि चायमितोऽपि बंहिष्ठविधाभिः श्रीकृष्णद्वैपायनादिभिराचार्य्यैरिति न तिरोहितं विशेषं विदुषामिति कृतं विस्तरेण। ईदृशस्य चास्य ग्रन्थस्य टीकामप्यन्वर्थनाम्नीं दुर्गमसङ्गमनीं श्रीजीवगोस्वामिपादा वस्तुतो दुर्गमानि मूलस्थलानि समजीगमन्।

अधुना मूलटीकोभयकृत्सम्बद्धं बहुधैव वक्तव्यमस्ति परन्त्वत्रासन्ननिर्दिष्टसमय एव ग्रन्थप्रकाशनानुरोधेन समयाभावात् सर्वमेव तद्विहाय ग्रन्थसम्बद्धै वस्वल्पा दिक् प्रदर्शिता। प्रकाशयितव्ये खल्वेतत्संबद्धे ग्रन्थान्तरे तत्सर्वमवगमयिष्यते।

प्रकृतकार्यमेतत् पुस्तकद्वयमवलम्ब्य समापितम्। तयोरेकं तावत् प्रख्यातचरवैदुषीकैर्द्वैतरहस्यप्रतिष्ठापकधुरीणैर्माध्वसंप्रदाचायार्यैरर्चनीयचरणैरस्मत्तात्ततगोस्वामिश्रीगोपीलालमहाराजैर्महता यत्नेन संगृह्य पुरुषक्रमायाते स्वेन वर्धिते च श्रीवृन्दावनस्थेऽस्मदीयश्रीमदनगोपालपुस्तकालये रक्षितस्तत्र विराजमानेभ्यः संगीतागमपारदर्शिभ्यो माध्वसंप्रदायाचार्येभ्यः पूज्यपादास्मद्भ्रातृविद्याभूषणश्रीवनमालिलालमहाराजेभ्य आनीय उपायोजि। द्वितीयं चास्मत्तातशिष्येण पण्डितरामनारायणविद्यारत्नशर्मणा बङ्गाक्षरैः प्रकाशितं नातिशुद्धम्।

एवं भगवत्कृपया मुहुर्मुहुरुपजातान् विघ्नानुपमर्द्य प्रकाशतामनायि ग्रन्थरत्नमेतत्। अत्र च मानुष्यकनान्तरीयकदोषनिबन्धनाः मुद्रणादिजाश्च त्रुटीरुपेक्ष्यैतत्सिन्धूत्थं पीयूषमास्वादयन्तु भगवद्रसभावुका इति प्रार्थयमानः प्रीयतां चानेन व्यापारेण सर्वान्तर्य्यामी भगवान् श्रीराधिकारमणतनुः श्रीगौरकृष्ण इत्याशास्ते—

श्रीरामजयन्त्याम्<br>सं० वै० १९८८,<br>वाराणस्याम्।

श्रीमाध्वसंप्रदायाचार्य्यदार्शनिकसार्वभौम-<br>साहित्यदर्शनाद्याचार्यतर्करत्नन्यायरत्न—<br>**गोस्वामी दामोदरशास्त्री।**

इति शम्।



श्रीश्रीगौरकृष्णः शरणम्

# श्रीहरिभक्तिरसामृतसिन्धौ

## विषयसूची—


| विषयाः | पृष्ठे | विषयाः | पृष्ठे |
|---|---|---|---|
| मङ्गलाचरणम् | १ | गुरुपादाश्रयः | ३० |
| गुरुपदकमलवन्दनम् | ४ | कृष्णदीक्षादिशिक्षणम् | ३० |
| भक्तवृन्दनमस्क्रिया | ५ | विश्वासेन गुरुसेवा | ३१ |
| ग्रन्थप्रस्तावना | ६ | साधुवर्त्मानुवर्तनम् | ३१ |
| विभागानां निरूपणम् | ६ | सद्धर्मजिज्ञासा | ३१ |
| पूर्वविभागस्यानुक्रमणिका | ६ | कृष्णार्थे भोगादित्यागः | ३१ |
| उत्तमाभक्तेर्लक्षणम् | ७ | द्वारकादिनिवासः | ३१ |
| उत्तमाभक्तेरुत्कृष्टत्वम् | ८ | गङ्गादिवासः | ३२ |
| भक्तेः प्रशंसा | ,, | यावदर्थानुवर्तिता | ३२ |
| भक्तेर्गुणाः | ,, | हरिवासरसंमानः | ३२ |
| भक्तेः पापादिहरत्वम् | ,, | धात्र्यश्वत्थादिगौरवम् | ३२ |
| शुभदत्वम् | १० | कृष्णविमुखसङ्गपरित्यागः | ३२ |
| मोक्षलघुताकृद् भक्तिः | ११ | शिष्याद्यननुबन्धित्वादित्रयम् | ३२ |
| सुदुर्लभा द्विधा भक्तिः | ११ | व्यवहारेऽप्यकृपणता | ३३ |
| सान्द्रानन्दविशेषात्मा भक्तिः | १२ | शोकमोहाद्यवशीभूतता | ३३ |
| श्रीकृष्णाकर्षिणी भक्तिः | १३ | अन्यदेवताद्यनवज्ञा | ३३ |
| साधनत्वादिना भक्तिभेदाः | १४ | भूतानुद्वेगदायिता | ३३ |
| साधनभक्तिः | १५ | सेवानामापराधवर्जनम् | ३३ |
| तस्या द्वैविध्यम् | १५ | तन्निन्दाद्यसहिष्णुता | ३४ |
| वैधी भक्तिः | १५ | वैष्णवचिह्नधारणम् | ३५ |
| तत्राधिकारी | १६ | नामाक्षरधारणम् | ३५ |
| उत्तमादिभेदेन भक्तत्रैविध्यम् | १७ | निर्माल्यधारणम् | ३५ |
| शुद्धभक्त्यधिकारवान् | १८ | हरिसंमुखनृत्यम् | ३५ |
| भुक्तिमुक्तिस्पृहासत्त्वे |  | दण्डवत्प्रणामः | ३६ |
| भक्तिसुखस्यानुदयः | १९ | अभ्युत्थानम् | ,, |
| भक्तानां मोक्षानिच्छा | २० | अनुव्रज्या | ,, |
| भक्तौ नरमात्राधिकारः | २७ | स्थाने गतिः | ,, |
| साधनभक्तेश्चतुःषष्टिरङ्गानि | २९ | परिक्रमणम् | ,, |

| विषयाः | पृष्ठे | विषयाः | पृष्ठे |
|---|---|---|---|
| अर्चनम् | ३६ | मित्रवृत्तिसख्यम् | ४४ |
| परिचर्या | ३७ | आत्मनिवेदनम् | ४४ |
| गीतम् | ,, | देहिसमर्पणम् | ४५ |
| सङ्कीर्तनम् | ३८ | देहसमर्पणम् | ४५ |
| लीलाकीर्तनम् | ३८ | निजप्रियोपहरणम् | ४५ |
| जपः | ,, | तदर्थाखिलचेष्टितम् | ४५ |
| विज्ञप्तिः | ,, | शरणापत्तिः | ४६ |
| संप्रार्थनात्मिका विज्ञप्तिः | ,, | तुलसीसेवनम् | ४६ |
| दैन्यबोधिका ,, | ,, | शास्त्रसेवनम् | ४६ |
| लालसामयी ,, | ३९ | मथुरासेवनम् | ४७ |
| स्तवपाठः | ,, | वैष्णवसेवा | ४७ |
| नैवेद्यास्वादः | ,, | यथावैभवोत्सवः | ४८ |
| पाद्यास्वादः | ,, | कार्तिकमासव्रतादरः | ४८ |
| धूपसौरभ्यम् | ४० | जन्मदिनयात्रा | ४८ |
| निर्माल्यसौरभ्यम् | ,, | श्रीमूर्तिचरणसेवनप्रीतिः | ४८ |
| श्रीमूर्तिस्पर्शनम् | ,, | श्रीभागवतार्थस्वादः | ४८ |
| श्रीमूर्तिदर्शनम् | ,, | सजातीयवासनभक्तसंगः | ५० |
| आरात्रिकदर्शनम् | ,, | नामसंकीर्तनम् | ५० |
| उत्सवदर्शनम् | ४० | मथुरामण्डलस्थितिः | ५१ |
| पूजादर्शनम् | ४० | उक्तश्रीमूर्तिप्रभृतिपञ्चकेऽल्पश्रद्धयाऽपि मनुष्यकल्याणम् | ५१ |
| श्रवणलक्षणम् | ४१ | ज्ञानवैराग्ययोर्भक्तियोगानङ्गत्वम् | ५३ |
| नामश्रवणम् | ४१ | ज्ञानवैराग्यसाध्यस्य भक्त्यैव सिद्धिः | ५४ |
| चरित्रश्रवणम् | ४१ | वैराग्यम् | ५५ |
| गुणश्रवणम् | ४१ | फल्गुवैराग्यम् | ५५ |
| श्रीकृष्णकृपेक्षणम् | ४१ | उत्तमायां भक्तावनुपयुक्तान्यङ्गानि | ५६ |
| श्रीकृष्णस्मृतिः | ४१ | एकाङ्गा भक्तिः | ५६ |
| ध्यानलक्षणम् | ४२ | अनेकाङ्गा भक्तिः | ५७ |
| गुणध्यानम् | ४२ | वैधी भक्तिः | ५७ |
| क्रीडाध्यानम् | ४२ | रागानुगा भक्तिः | ५७ |
| सेवाध्यानम् | ४२ | भक्तस्य रिपोश्च पार्थक्ये न गतिः | ५९ |
| दास्यलक्षणम् | ४२ | | |
| कर्मार्पणदास्यम् | ४३ | | |
| कैङ्कर्यदास्यम् | ४३ | | |
| सख्यलक्षणम् | ४३ | | |
| विश्वाससख्यम् | ४४ | | |

| विषयाः | पृष्ठे |
|---|---|
| कामरूपा भक्तिः | ६० |
| सम्बन्धरूपा भक्तिः | ६१ |
| तत्राधिकारी | ६१ |
| तल्लोभोत्पत्तिकारणम् | ६१ |
| कामानुगा | ६२ |
| सम्बन्धानुगा | ६३ |
| साधनभक्तिलहरीसमाप्तिः | ६४ |
| भावभक्तिलहर्य्यारम्भः | ६४ |
| भावभक्तिः | ६४ |
| साधनाभिनिवेशजो भावः | ६६ |
| वैधीरागानुगासाधनाभिनिवेशजः | ६६ |
| श्रीकृष्णतद्भक्तप्रसादजः | ६७ |
| कृष्णप्रसादजः | ६८ |
| वाचिकप्रसादजः | ६८ |
| आलोकप्रदानजः | ६८ |
| हार्दभावः | ६८ |
| तद्भक्तप्रसादजः | ६८ |
| जाताङ्कुरभावभक्तेरनुभावाः | ६९ |
| क्षान्तिः | ६९ |
| अव्यर्थकालत्वम् | ६९ |
| विरक्तिः | ६९ |
| मानशून्यता | ६९ |
| आशाबन्धः | ७० |
| समुत्कण्ठा | ७० |
| नामगाने सदा रुचिः | ७० |
| तद्गुणाख्याने आसक्तिः | ७० |
| तद्वसतिस्थले प्रीतिः | ७१ |
| रतिलक्षणम् | ७१ |
| रत्याभासः | ७१ |
| प्रतिबिम्बः | ७१ |
| छाया | ७२ |
| भावभक्तिलहरीसमाप्तिः | ७४ |
| प्रेमभक्तिलहर्य्यारम्भः | ७४ |
| प्रेमा | ७४ |
| भावोत्थः | ७५ |

| विषयाः | पृष्ठे |
|---|---|
| वैधभावोत्थः | ७५ |
| रागानुगीयभावोत्थः | ७५ |
| हर्यतिप्रसादोत्थः | ७५ |
| माहात्म्यज्ञानयुक्तः | ७६ |
| केवलप्रेमा | ७६ |
| प्रेमोदयक्रमः | ७६ |
| प्रेमलहरीसमाप्तिः | ७७ |
| पूर्वभागसमाप्तिश्च | ७७ |
| भक्तिरसभासान्यनिरूपको दक्षिणभागारम्भः | ७८ |
| विभावलहरी | ७८ |
| दक्षिणविभागानुक्रमः | ७८ |
| विभावादिसामान्यलक्षणम् | ७९ |
| विभावाः | ७९ |
| आलम्बनभेदाः | ७९ |
| श्रीकृष्णः | ८० |
| अन्यरूपेण सः | ८० |
| स्वरूपेण सः | ८० |
| आवृतस्वरूपः | ८० |
| प्रकटस्वरूपः | ८० |
| कृष्णगुणाः | ८१ |
| सुरम्याङ्गः | ८४ |
| सर्वसल्लक्षणान्वितः | ८४ |
| गुणोत्थलक्षणम् | ८४ |
| अङ्कोत्थलक्षणम् | ८५ |
| रुचिरः | ८५ |
| तेजसा युक्तः | ८६ |
| बलीयान् | ८६ |
| वयसान्वितः | ८७ |
| विविधाद्भुतभाषावित् | ८७ |
| सत्यवाक्यः | ८७ |
| प्रियंवदः | ८८ |
| वावदूकः | ८८ |
| सुपाण्डित्यः | ८८ |
| बुद्धिमान् | ८९ |

| विषयाः | पृष्ठे |
|---|---|
| प्रतिभान्वितः | ९० |
| विदग्धः | ९० |
| चतुरः | ९० |
| दक्षः | ९१ |
| कृतज्ञः | ९१ |
| सुदृढव्रतः | ९१ |
| देशकालसुपात्रज्ञः | ९२ |
| शास्त्रचक्षुः | ९२ |
| शुचिः | ९२ |
| वशी | ९३ |
| स्थिरः | ९३ |
| दान्तः | ९३ |
| क्षमाशीलः | ९३ |
| गम्भीरः | ९४ |
| धृतिमान् | ९४ |
| समः | ९५ |
| वदान्यः | ९५ |
| धार्मिकः | ९६ |
| शूरः | ९६ |
| करुणः | ९६ |
| मान्यमानकृत् | ९७ |
| दक्षिणः | ९७ |
| विनयी | ९७ |
| ह्रीमान् | ९७ |
| शरणागतपालकः | ९८ |
| सुखी | ९८ |
| भक्तसुहृत् | ९९ |
| प्रेमवश्यः | ९९ |
| सर्वशुभंकरः | १०० |
| प्रतापी | १०० |
| कीर्तिमान् | १०० |
| रक्तलोकः | १०१ |
| साधुसमाश्रयः | १०१ |
| नारीगणमनोहारी | १०१ |

| विषयाः | पृष्ठे |
|---|---|
| सर्वाराध्यः | १०२ |
| समृद्धिमान् | १०२ |
| वरीयान् | १०० |
| ईश्वरः | १०२ |
| सदास्वरूपसंप्राप्तः | १०३ |
| सर्वज्ञः | १०३ |
| नित्यनूतनः | १०४ |
| सच्चिदानन्दसान्द्राङ्गः | १०४ |
| सर्वसिद्धिनिषेवितः | १०६ |
| अविचिन्त्यमहाशक्तिः | १०६ |
| कोटिब्रह्माण्डविग्रहः | १०७ |
| अवतारावलीबीजम् | १०८ |
| हतारिगतिदायकः | १०८ |
| आत्मारामगणाकर्षी | १०८ |
| लीलाधिक्यम् | १०८ |
| प्रेम्णा प्रियाधिक्यम् | १०९ |
| वेणुमाधुर्यम् | १०९ |
| रूपमाधुर्यम् | ११० |
| हरेः पूर्णतमत्वादिभेदाः | १११ |
| धीरोदात्तः | १११ |
| धीरललितः | ११२ |
| धीरशान्तः | ११२ |
| धीरोद्धतः | ११३ |
| अष्टादशमहादोषराहित्यम् | ११४ |
| अष्टसद्गुणाः | ११५ |
| शोभा | ११५ |
| विलासः | ११६ |
| माधुर्यम् | ११६ |
| मङ्गल्यम् | ११६ |
| स्थैर्यम् | ११७ |
| तेजः | ११७ |
| ललितम् | ११७ |
| औदार्यम् | ११८ |
| श्रीकृष्णसहायाः | ११८ |
| कृष्णभक्ताः | ११८ |

| विषयाः | पृष्ठे | विषयाः | पृष्ठे |
| --- | --- | --- | --- |
| साधकाः | ११८ | नूपुरम् | १३१ |
| सिद्धाः | ११९ | कम्बुः | १३१ |
| प्राप्तसिद्धयः | ११९ | पादाङ्क | १३२ |
| साधनसिद्धाः | ११९ | क्षेत्रम् | १३२ |
| कृपासिद्धाः | ११९ | तुलसी | १३२ |
| नित्यसिद्धाः | १२० | भक्ताः | १३२ |
| उद्दीपनाः | १२१ | भगवद्वासरः | १३२ |
| गुणाः | १२२ | विभावलहरीसमाप्तिः | १३२ |
| वयः | १२२ | अनुभावाः | १३३ |
| प्रथमकैशोरम् | १२३ | नृत्यम् | १३३ |
| मध्यकैशोरम् | १२४ | विलुठितम् | १३३ |
| मध्यकैशोरमोहनता | १२५ | गीतम् | १३३ |
| शेषकैशोरम् | १२५ | क्रोशनम् | १३३ |
| शेषकैशोरमाधुर्यम् | १२५ | तनुमोटनम् | १३४ |
| शेषकैशोरमोहनता | १२६ | हुङ्कारः | १३४ |
| सौन्दर्यम् | १२६ | जृम्भणम् | १३४ |
| रूपम् | १२७ | श्वासभूमा | १३४ |
| मृदुता | १२७ | लोकापेक्षापरित्यागः | १३४ |
| चेष्टा | १२७ | लालास्रवः | १३५ |
| रासः | १२७ | अट्टहासः | १३५ |
| दुष्टवधः | १२८ | घूर्णा | १३५ |
| प्रसाधनम् | १२८ | हिक्का | १३५ |
| वसनम् | १२८ | अनुभावलहरीसमाप्तिः | १३५ |
| वसनयुगम् | १२८ | सात्त्विकलहर्य्यारम्भः | १३६ |
| वसनचतुष्कम् | १२८ | सात्त्विकभावाःस्निग्धाः | १३६ |
| वसनभूयिष्ठम् | १२८ | स्निग्धाः | १३६ |
|  |  | दिग्धाः | १३६ |
| आकल्पः | १२९ | रूक्षाः | १३७ |
| मण्डनम् | १२९ | स्तम्भः | १३८ |
| स्मितम् | १३० | स्वेदः | १३९ |
| अङ्गसौरभम् | १३० | रोमाञ्चः | १३९ |
| वंशः | १३० | स्वरभेदः | १४० |
| वेणुः | १३० | वेपथुः | १४० |
| मुरली | १३० | वैवर्ण्यम् | १४१ |
| वंशी | १३० | अश्रु | १५२ |
|  |  | प्रलयः | १४३ |
| शृङ्गम् | १३१ | सात्त्विकभावानां चतुर्विधत्वम् | १४३ |

| विषयाः | पृष्ठे | विषयाः | पृष्ठे |
|---|---|---|---|
| धूमायिताः सात्त्विकभावाः | १४४ | मतिः | १६६ |
| ज्वलिताः सात्त्विकभावाः | १४४ | धृतिः | १६७ |
| दीप्ताः सात्त्विकभावाः | १४४ | हर्षः | १६७ |
| उद्दीप्ताः सात्त्विकभावाः | १४५ | औत्सुक्यम् | १६८ |
| सात्त्विकाभासचतुर्विधत्वम् | १४५ | उग्रता | १६८ |
| रत्याभासभवाः | १४६ | अमर्षः | १६८ |
| सत्त्वाभासभवाः | १४६ | असूया | १६९ |
| निःसत्त्वाः सात्त्विकाभासाः | १४६ | चापलम् | १६९ |
| प्रतीपाः सात्त्विकाभासाः | १४७ | निद्रा | १७० |
| सात्त्विकलहरीसमाप्तिः | १४७ | सुप्तिः | १७१ |
| व्यभिचारिलहर्य्यारम्भः | १४८ | बोधः | १७१ |
| व्यभिचारिणः | १४८ | अपरेषां भावानामुक्तेष्वेवान्तर्भावः | १७३ |
| निर्वेदः | १४८ | परतन्त्राः संचारिणः | १७४ |
| विषादः | १४९ | साक्षात् संचारिणः | १७५ |
| दैन्यम् | १५० | व्यवहितः संचारी | १७५ |
| ग्लानिः | १५१ | अवरः संचारी | १७५ |
| श्रमः | १५१ | स्वतन्त्रः संचारी | १७६ |
| मदः | १५२ | रतिशून्यः संचारी | १७६ |
| गर्वः | १५२ | रत्यनुस्पर्शनः संचारी | १७६ |
| शङ्का | १५३ | रतिगन्धिः संचारी | १७६ |
| त्रासः | १५४ | संचार्याभासः | १७७ |
| आवेगः | १५५ | संचारिणोऽस्थानत्वरूपं प्रातिकूल्यम् | १७७ |
| उन्मादः | १५७ | संचारिणोस्थानत्वरूपमनौचित्यम् | १७७ |
| अपस्मारः | १५८ | भावोत्पत्तिः | १७८ |
| व्याधिः | १५८ | भावसन्धिः | १७९ |
| मोहः | १५९ | भावशाबल्यम् | १८० |
| मृतिः | १६० | भावशान्तिः | १८० |
| आलस्यम् | १६० | भक्तभेदेन भावे तारतम्यम् | १८१ |
| जाड्यम् | १६१ | व्यभिचारिलहरीसमाप्तिः | १८३ |
| व्रीडा | १६२ | स्थायिलहर्य्यारम्भः | १८४ |
| अवहित्था | १६२ | स्थायिभावःश्रीकृष्णविषया रतिः | १८४ |
| स्मृतिः | १६४ | मुख्या श्रीकृष्णविषया रतिः | १८४ |
| वितर्कः | १६४ | स्वार्था रतिः | १८४ |
| चिन्ता | १६५ | | |

| विषयाः | पृष्ठे | विषयाः | पृष्ठे |
|---|---|---|---|
| परार्थी रतिः | १८४ | शान्ताः | २०७ |
| शुद्धा रतिः | १८५ | आत्मारामाः | २०७ |
| सामान्या रतिः | १८५ | तापसाः | २०७ |
| स्वच्छा रतिः | १८५ | उद्दीपनाः | २०७ |
| शान्ती रतिः | १८६ | अनुभावाः | २०८ |
| रतेर्भेदत्रयम् | १८७ | सात्त्विकाः | २०९ |
| केवला रतित्रयी | १८७ | सञ्चारिणः | २०९ |
| संकुला रतित्रयी | १८७ | स्थायी | २०९ |
| प्रीतिरतिः | १८७ | शान्तभक्तिरसलहरीसमाप्तिः | २१२ |
| सख्यरति | १८८ | प्रीतभक्तिरसः | २१२ |
| वात्सल्यरतिः | १८८ | संभ्रमप्रीतो भक्तिरसः | २१२ |
| प्रियतारतिः | १८९ | तत्रालम्बनो हरिः | २१२ |
| गौणी रतिः | १८९ | दासाः | २१४ |
| हासरतिः | १९१ | अधिकृतदासाः | २१४ |
| विस्मयरतिः | १९२ | शरण्याः | २१५ |
| उत्साहरतिः | १९२ | ज्ञानिचराः | २१५ |
| शोकरतिः | १९२ | सेवानिष्ठाः | २१५ |
| क्रोधरतिः | १९३ | पारिषदाः | २१६ |
| भयरतिः | १९३ | अनुगाः | २१७ |
| जुगुप्सारतिः | १९३ | पुरस्थानुगाः | २१७ |
| सात्त्विकराजसतामसरतिभेदाः | १९४ | व्रजस्थानुगाः | २१७ |
| रतेः शीतत्वमुष्णत्वञ्च | १९५ | धुर्यादिपारिषदत्रयम् | २१८ |
| रतेर्विभावादिप्राप्तिः | १९५ | आश्रितादित्रिविधा दासाः | २१९ |
| भक्तिरसे मुख्यगौणभेदः | २०० | तेषां नित्यसिद्धादिभेदाः | २१९ |
| मुख्यभक्तिरसः | २०० | तत्र विभावाः | २२० |
| गौणभक्तिरसः | २०० | अनुभावाः | २२० |
| भक्तिरसे वर्णदेवताभेदाः | २०१ | सात्त्विकाः | २२१ |
| शान्तादिरस आनन्दानुभवः | २०२ | व्यभिचारिणः | २२१ |
| भक्तिरसास्वादने बहिर्मुखाः | २०३ | स्थायी | २२२ |
| पश्चिमविभागारम्भः | २०५ | प्रेमा | २२३ |
| पश्चिमविभागलहर्य्यः | २०५ | स्नेहः | २२३ |
| शान्तभक्तिरसः | २०५ | रागः | २२४ |
| तत्रालम्बनाः | २०६ | अयोगः | २२५ |
| | | उत्कण्ठितम् | २२५ |

| विषयाः | पृष्ठे | विषयाः | पृष्ठे |
|---|---|---|---|
| औत्सुक्यम् | २२५ | स्नेहः | २३५ |
| दैन्यम् | २२६ | रागः | २३६ |
| निर्वेदः | २२६ | उत्कण्ठितम् | २३६ |
| चिन्ता | २२६ | वियोगः | २३६ |
| चापलम् | २२६ | तुष्टिः | २३६ |
| जडता | २२७ | स्थितिः | २३६ |
| उन्मादः | २२७ | प्रीतिभक्तिरसलहरीसमाप्तिः | २३७ |
| मोहः | २२८ | प्रेयोभक्तिरसलहर्य्यारम्भः | २३७ |
| वियोगः | २२८ | प्रेयोभक्तिरसः | २३७ |
| तापः | २२८ | तत्रालम्बनाः | २३७ |
| कृशता | २२९ | श्रीकृष्णः | २३७ |
| जागर्य्या | २२९ | श्रीकृष्णस्य वयस्याः | २३७ |
| आलम्बनशून्यता | २२९ | पुरसम्बन्धिवयस्याः | २३७ |
| अधृतिः | २२९ | सुहृदः प्रियनर्म | २४० |
| जडता | २२९ | बलदेवस्य रूपम् | २४१ |
| व्याधिः | २२९ | सखायः | २४१ |
| उन्मादः | २२९ | प्रियसखाः | २४२ |
| मूर्च्छितम् | २२९ | प्रियनर्मवयस्याः | २४३ |
| मृतिः | २३० | व्रजसम्बन्धिवयस्याः | २४४ |
| योगः | २३० | उद्दीपनाः | २४४ |
| सिद्धिः | २३० | प्रेयोभक्तिरसे | २४५ |
| तुष्टिः | २३० | वयःप्रभृतयः | २४५ |
| स्थितिः | २३१ | कौमारम् | २४५ |
| गौरवप्रीतिः | २३२ | पौगण्डम् | २४५ |
| तत्रालम्बनाः | २३२ | आद्यपौगण्डम् | २४६ |
| हरिः | २३२ | मध्यपौगण्डम् | २४६ |
| लाल्या | २३२ | शेषपौगण्डम् | २४७ |
| लाल्यानां रूपम् | २३३ | कैशोरम् | २४८ |
| उद्दीपनाः | २३३ | श्रीकृष्णस्य रूपम् | २४९ |
| अनुभावाः | २३३ | शृङ्गम् | २४९ |
| सात्त्विकाः | २३४ | वेणुः | २४९ |
| व्यभिचारिणः | २३४ | शङ्खः | २४९ |
| स्थायी | २३४ | विनोदः | २४९ |
| गौरवप्रीतिः | २३५ | तत्रानुभावाः | २४९ |
| प्रेमा | २३५ | सात्त्विकाः | २५१ |

| विषया | पृष्ठे | विषयाः | पृष्ठे |
|---|---|---|---|
| व्यभिचारिणः | २५१ | रागवत् | २६७ |
| स्थायी | २५२ | अयोग उत्कण्ठितम् | २६७ |
| सख्यरतिः | २५२ | वियोगः | २६७ |
| प्रणयः | २५२ | व्यभिचारिणः | २६८ |
| प्रेमा | २५२ | योगे सिद्धिः | २६९ |
| स्नेहः | २५३ | तुष्टिः | २६९ |
| रागः | २५३ | स्थितिः | २६९ |
| अयोग उत्कण्ठितम् | २५३ | वत्सलभक्तिरसलहरीसमाप्तिः | २७६ |
| वियोगे उत्कण्ठितम् | २५३ | मधुरभक्तिरसलहरी | २७६ |
| तापादिदशदशाः | २५४ | तत्रालम्बनाः | २७७ |
| योगे सिद्धिप्रभृतयः | २५६ | श्रीकृष्णः | २७७ |
| प्रेयोभक्तिरसलहरीसमाप्तिः | २५७ | प्रेयसीवर्गः | २७७ |
| वत्सलभक्तिरसः | २५७ | प्रेयस्या राधाया रूपम् | २७७ |
| तत्रालम्बनाः | २५७ | श्रीकृष्णरतिः | २७८ |
| कृष्णः | २५७ | उद्दीपनाः | २७८ |
| गुरुवर्गः | २५८ | अनुभावाः | २७८ |
| व्रजेश्वरीरूपम् | २५९ | सात्त्विकाः | २७८ |
| वात्सल्यम् | २६० | व्यभिचारिणः | २७८ |
| नन्दस्य रूपम् | २६० | स्थायी | २७९ |
| वात्सल्यम् | २६० | विप्रलम्भः | २८० |
| उद्दीपनाः | २६० | पूर्वरागः | २८० |
| कौमारम् | २६० | मानः | २८१ |
| आद्यकौमारम् | २६० | प्रवासः | २८१ |
| मध्यकौमारम् | २६१ | संभोगः | २८१ |
| शेषकौमारम् | २६२ | मधुरभक्तिरसलहरीसमाप्तिः | २८१ |
| पौगण्डम् | २६३ | पश्चिमविभागसमाप्तिः | २८२ |
| कैशोरम् | २६३ | उत्तरविभागारम्भः | २८३ |
| शैशवचापलम् | २६३ | हास्यभक्तिरसलहरी | २८३ |
| अनुभावाः | २६३ | तत्रालम्बनाः | २८३ |
| सात्त्विकाः | २६४ | कृष्णः | २८३ |
| व्यभिचारिणः | २६४ | तदन्वयी | २८४ |
| स्थायी | २६५ | तत्रोद्दीपनादयः | २८४ |
| वात्सल्यरतिः | २६५ | हासरतेः षड्भेदाः स्मितादयः | २८४ |
| प्रेमवत् | २६५ | स्मितम् | २८४ |
| स्नेहवत् | २६७ | हसितम् | २८५ |

| विषयाः | पृष्ठे | विषयाः | पृष्ठे |
|---|---|---|---|
| विहसितम् | २८५ | कृष्णस्य प्रियजनाः | २९८ |
| अवहसितम् | २८५ | स्वप्रियः | २९८ |
| अपहसितम् | २८६ | करुणभक्तिरसलहरीसमाप्तिः | २९९ |
| अतिहसितम् | २८६ | रौद्रभक्तिरसलहरी | ३०० |
| हास्यभक्तिरसलहरीसमाप्तिः | २८६ | रौद्रभक्तिरसः | ३०० |
| अद्भुतभक्तिरसलहरी | २८७ | कृष्णं प्रति सखीक्रोधः | ३०० |
| अद्भुतभक्तिरसः | २८७ | जरत्या क्रोधः | ३०० |
| तस्योद्दीपनादयः | २८७ | हितः | ३०१ |
| तस्य साक्षात् स्थायी | २८७ | अनवहितः | ३०१ |
| दृष्टम् | २८८ | साहसी | ३०१ |
| श्रुतम् | २८८ | ईर्ष्युः | ३०१ |
| संकीर्तितम् | २८८ | अहितः | ३०२ |
| अनुमितम् | २८८ | तत्रोद्दीपनादयः | ३०२ |
| अद्भुतभक्तिरससमाप्तिः | २८८ | क्रोधरतिः | ३०२ |
| वीरभक्तिरसलहरी | २८८ | क्रोधस्य त्रैविध्यम् | ३०३ |
| वीरभक्तिरसः | २८८ | रौद्रभक्तिरसलहरीसमाप्तिः | ३०४ |
| युद्धवीरः | २८९ | भयानकभक्तिरसलहरी | ३०५ |
| तत्र कृष्णः | २८९ | भयानकभक्तिरसः | ३०५ |
| सुहृद्वरः | २९० | तत्रालम्बनाः | ३०५ |
| कत्थितम् | २९० | अनुकम्प्येषु कृष्णः | ३०५ |
| आहोपुरुषिका | २९१ | बन्धुषु दारुणाः | ३०५ |
| आहार्य्योत्साहरतिः | २९१ | भयानकभक्तिरसस्योद्दीपनादयः | ३०६ |
| सहजोत्साहरतिः | २९१ | बीभत्सभक्तिरसलहरी | ३०७ |
| दानवीरः | २९२ | बीभत्सभक्तिरसः | ३०७ |
| बहुप्रदः | २९२ | तस्यालम्बनादयः | ३०७ |
| आभ्युदयिकः | २९२ | जुगुप्सारतिः | ३०७ |
| तत्संप्रदानकः | २९३ | विवेकजा | ३०७ |
| प्रीतिदानम् | २९३ | प्रायिकी जुगुप्सा | ३०८ |
| पूजादानम् | २९३ | बीभत्सरसलहरीसमाप्तिः | ३०८ |
| उपस्थितदुरापार्थत्यागी | २९३ | रसानां मैत्रीवैरस्थितिः | ३०९ |
| दयावीरः | २९४ | सुहृत्कृत्यम् | ३११ |
| धर्मवीरः | २९५ | वैरिकृत्यम् | ३१६ |
| वीरभक्तिरसलहरीसमाप्तिः | २९६ | मैत्रीवैरस्थितिलहरीसमाप्तिः | ३२१ |
| करुणभक्तिरसलहरी | २९७ | रसाभासलहरी | ३२२ |
| तत्रालम्बनादयः | २९७ | रसाभासाः | ३२२ |
| कृष्णः | ५९७ | | |

| विषयाः | पृष्ठे | विषया | पृष्ठे |
|---|---|---|---|
| शान्तोपरसः | ३२२ | उपरसाः | ३२२ |
| प्रीतोपरसः | ३२२ | अनुभाववैरूप्यम् | ३२५ |
| प्रेय उपरसः | ३२३ | ग्राम्यत्वम् | ३२६ |
| वत्सलोपरसः | ३२३ | अनुरसाः | ३२६ |
| शृङ्गारोपरसः | ३२३ | अपरसाः | ३२६ |
| एकत्र रतिः | ३२३ | हास्यापरसः | ३२७ |
| अनेकत्र रतिः | ३२४ | रसाभासलहरीसमाप्तिः | ३२७ |
| विभाववैरूप्यम् | ३२४ | उत्तरविभागसमाप्तिः | ३२८ |
| | | ग्रन्थसमाप्तिश्च | ३२८ |




# पूज्यपादश्रीरूपगोस्वामिनिर्मितः

# श्रीहरिभक्तिरसामृतसिन्धुः

पूज्यतमश्रीजीवगोस्वामिकृतया
दुर्गमसंगमन्याख्यटीकया सहितः



श्रीगोविन्ददेवो विजयते

अखिलरसामृतमूर्तिः प्रसृमररुचिरुद्धतारकापालिः ।
कलितश्यामाललितो राधाप्रेयान् विधुर्जयति ॥ १ ॥

---

## दुर्गमसङ्गमनी

श्रीराधादामोदरौ जयतः ।

सनातनसमो यस्य ज्यायान् श्रीमान् सनातनः ।
श्रीवल्लभोऽनुजः सोऽसौ श्रीरूपो जीवसद्गतिः ॥ १ ॥

अथ श्रीमान् सोऽयं ग्रन्थकारः सकलभागवतलोकहिताभिलाषपरवशतया प्रकाशितैः स्वहृदयदिव्यकमलकोषविलासिभिः श्रीमद्भागवतरसैरेव भक्तिरसामृतसिन्धुनामानं ग्रन्थमपूर्वरचनमाचिन्वानस्तद्वर्णयितव्यस्यैव च सर्वोत्तमतां निश्चिन्वानस्तद्वयञ्जनयैव मङ्गलमासञ्जयति, एवं सर्व एव ग्रन्थोऽयं मङ्गलरूप इति च विज्ञापयति—अखिलेति ।

विधुः श्रीकृष्णो जयति सर्वोत्कर्षेण वर्तते, यद्यपि 'विधुः श्रीवत्सलाञ्छनः' इति सामान्यभगवदाविर्भावपर्यायस्तथापि विधुनोति खण्डयति सर्वदुःखमतिक्रामति सर्वं चेति; यद्वा विदधाति करोति सर्वसुखं सर्वं चेति निरुक्तेः पर्यवसाने विचार्यमाणे तत्रैव विश्रान्तेः, असुरा-

---

ज्योत्स्ना

श्रीगौरकृष्णः शरणम् ।

श्रीगौरकृष्णचरणौ नत्वा कुर्वेऽत्र टिप्पनीं ज्योत्स्नाम् ।
भक्तिरसामृतसिन्धौ व्याख्यायां चास्य गूढविषयेषु ॥

णामपि मुक्तिप्रदत्वेन स्ववैभवातिक्रान्तसर्वत्वेन परमापूर्वस्वप्रेममहासुखपर्यन्तसुखविस्तारकत्वेन स्वयंभगवत्त्वेन च तस्यैव प्रसिद्धेः। अत एवामरेणापि तत्प्राधान्येनैव तानि नामानि प्रोक्तानि; 'वसुदेवोऽस्य जनकः' इत्याद्युक्तेः। एतदेव सर्वं जयत्यर्थेन स्पष्टीकृतम्। सर्वोत्कर्षेण वृत्तिर्नाम तत्तदेवेति। अत एव प्राकट्यसमयमात्रदृष्ट्या या लोकस्याप्रतीतिस्तस्या निरासको वर्तमान-प्रयोगः। तथा च प्रमाणानि—'विजयरथकुटुम्बे' इत्यादौ—

'यमिह निरीक्ष्य हता गताः स्वरूपम्' इति,

'स्वयं त्वसाम्यातिशयस्त्र्यधीशः स्वाराज्यलक्ष्म्याप्तसमस्तकामः।
बलिं हरद्भिश्चिरलोकपालैः किरीटकोटीडितपादपीठः॥' इति,

'यस्याननं मकरकुण्डलचारुकर्णभ्राजत्कपोलसुभगं सविलासहासम्।
नित्योत्सवं न ततृपुर्दृगभिः पिबन्त्यो नार्यो नराश्च मुदिताः कुपिता निमेश्च॥' इति,
'का स्त्र्यङ्ग! ते कलपदामृतवेणुगीतसंमोहिताऽऽर्यचरितान्न चलेत्त्रिलोक्याम्।
त्रैलोक्यसौभगमिदं च निरीक्ष्य रूपं यद्गोद्विजद्रुममृगाः पुलकान्यबिभ्रन्॥' इति,

'यन्मर्त्यलीलौपयिकं स्वयोगमायाबलं दर्शयता गृहीतम्।
विस्मापनं स्वस्य च सौभगर्धेः परं पदं भूषणभूषणाङ्गम्॥' इति,
'एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्॥' इति,
'जयति जननिवासो देवकीजन्मवादः' इत्यादि श्रीभागवते।

अथ तत्तदुत्कर्षहेतुं स्वरूपलक्षणमाह—

अखिलरसा वक्ष्यमाणाः शान्ताद्या द्वादश यस्मिन् तादृशममृतं परमानन्द एव मूर्तिर्यस्य सः, 'आनन्दमूर्तिमुपगुह्य' इति 'त्वय्येव नित्यसुखबोधतनावनन्ते' इति, 'मल्लानामशनिः' इत्यादि श्रीभागवतात्, 'तस्मात् कृष्ण एव परो देवस्तं ध्यायेत्तं रसयेद्' इति श्रीगोपालतापिनीभ्यश्च। तत्रापि रसविशेषविशिष्टपरिकरवैशिष्ट्येनाविर्भाववैशिष्ट्यं दृश्यते; अत एवादिरस-विशेषविशिष्टसंबन्धेन नितराम्। यथा—

'गोप्यस्तपः किमचरन् यदमुष्य रूपं लावण्यसारमसमोर्ध्वमनन्यसिद्धम्।
दृग्भिः पिबन्त्यनुसवाभिनवं दुरापमेकान्तधाम यशसः श्रिय ऐश्वरस्य॥' इति,
'त्रैलोक्यलक्ष्म्येकपदं वपुर्दधद्॥' इति, 'तत्रातिशुशुभे ताभिः' इत्यादि श्रीभागवते।

तासु च गोपीषु मुख्या दश भविष्योत्तरे श्रूयन्ते—

'गोपाली पालिका धन्या विशाखाऽन्या धनिष्ठिका।
राधाऽनुराधा सोमाभा तारका दशमी तथा॥' इति,

विशाखा ध्याननिष्ठिकेति पाठान्तरम्। तथेति। दशम्यपि तारकानाम्न्येवेत्यर्थः। दशमीत्यप्येकं नाम वा। स्कान्दप्रह्लादसंहिताद्वारकामाहात्म्ये च—

'ललितोवाच' इत्यादौ मुख्यास्वष्टसु पूर्वोक्ताभ्योऽन्या ललिताश्यामलाशैब्यापद्माभद्राश्च श्रूयन्ते, पूर्वोक्तास्तु राधाधन्याविशाखाश्च, तदेतदभिप्रेत्य तत्रापि मुख्यमुख्याभिरुत्तरोत्तर-वैशिष्ट्यं दर्शयितुमवरमुख्ये द्वे तावन्निष्कृष्य ताभ्यां वैशिष्ट्यमाह—प्रसृमराभिः प्रसरणशीलाभिः

रुचिभिः कान्तिभिः रुद्धे वशीकृते तारकापालिः येन सः । पालिकेति तु संज्ञायां कन्विधानात् । पालीति दीर्घान्तोऽपि क्वचिद् दृश्यते ।

अथ मध्यममुख्याभ्यामाह—कलिते आत्मसात्कृते श्यामा श्यामला ललिता च येन सः । अथ परममुख्ययाऽऽह—राधायां प्रेयानतिशयेन प्रीतिकर्ता, 'इगुपधज्ञाप्रीकिरः कः' इति कर्त्तरि कप्रत्ययविधेः । अत एवास्या एवासाधारण्यमालोक्य पूर्ववद्युग्मत्वेनापि नेयं निर्दिष्टा, अतस्तस्या एव प्राधान्यं पाद्मे कार्तिकमाहात्म्ये तत्कुण्डप्रसङ्गे—

'यथा राधा प्रिया विष्णोस्तस्याः कुण्डं प्रियं तथा ।
सर्वगोपीषु सैवैका विष्णोरत्यन्तवल्लभा ॥' इति ।

अत एव मात्स्यस्कान्दादौ शक्तित्वसाधारण्येनाभिन्नतया गणनायामपि तस्या एव वृन्दावने प्राधान्याभिप्रायेणाह—

'रुक्मिणी द्वारवत्यां तु राधा वृन्दावने वने ।' इति ।

तथा च बृहद्गौतमीये तस्या एव मन्त्रकथने—

'देवी कृष्णमयी प्रोक्ता राधिका परदेवता ।
सर्वलक्ष्मीमयी सर्वकान्तिः संमोहनी परा ॥' इति ।

ऋक्परिशिष्टश्रुतावपि—

'राधया माधवो देवो माधवेनैव राधिका ।
विभ्राजते जनेष्वा' इति ।

अत एवाहुः—'अनयाऽऽराधितो नूनम्' इत्यादि ।

अथ श्लेषार्थव्याख्या—तत्रैव श्लेषेणोपमां सूचयंस्तयाऽर्थविशेषं पुष्णाति सर्वलौकिका-लौकिकातीतेऽपि तस्मिन् लौकिकार्थविशेषोपमाद्वारा लोकानां बुद्धिप्रवेशः स्यादिति केनाप्यं-शेनोपमेयं सर्वतमस्तापजदुःखशमकत्वेन सर्वसुखदत्वेन च । तत्र पूर्ववन्निरुक्तिपर्यवसाने विचार्यमाणे राकापतेरेव विधुत्वं मुख्यं पर्यवस्यतीति सर्वतः प्रभावात्पूर्णत्वांशेन च । एवं सूर्यादीनां तापशमनत्वादि नास्तीति नोपमानयोग्यता । ततो विधुः सर्वत उत्कर्षेण वर्तत इति लभ्यते । वर्तमानप्रयोगांशस्तु प्रत्यृतुराजमेव तत्तद्रूपतयाऽनुवृत्तेः । एवं विशेष्ये साम्यं दर्शयित्वा विशेषणेऽपि साम्यं दर्शयति—अखिलेत्यादिभिः । अखिलः अखण्डो रस आस्वादो यत्र तादृश-मसृतं पीयूषं तदात्मिकैव मूर्तिर्मण्डलं यस्य । अत्र शब्देन साम्यं रसनीयत्वांशेनार्थेनापि योज्यम् । तथा प्रसृमराभी रुचिभिः कान्तिभी रुद्धाऽऽवृता तारकाणां पालिः श्रेणी येनेति पूर्व-वन्निजकान्तिवशीकृतकान्तिमतीगणविराजमानत्वांशेनापि ज्ञेयम् ।

तथा

'श्यामा तु वाग्गुलौ ।
अप्रसूताङ्गनायां च तथा सोमलतौषधौ ।
त्रिवृताशारिवागुन्द्रानिशाकृष्णाप्रियङ्गुषु ॥' इति विश्वप्रकाशात् कलित-

मूरीकृतं श्यामाया रात्रेर्ललितं विलासो येनेति रात्रिविलासत्वेनापि ज्ञेयम् , तथा राधायां विशाखानाम्न्यां तारायां प्रेयानधिकप्रीतिमान् ऋतुराजपूर्णिमायां तदनुगामित्वाद् ,

**हृदि यस्य प्रेरणया प्रवर्त्तितोऽहं वराकरूपोऽपि ।**
**तस्य हरेः पदकमलं वन्दे चैतन्यदेवस्य ॥ २ ॥**
**विश्रामममन्दिरतया तस्य सनातनतनोर्मदीशस्य ।**

---

इति तदनुगतिमात्रसाध्यस्य वैभवविज्ञत्वांशेनापि ज्ञेयम् । उपमानस्य चैतानि विशेषणान्युत्कर्ष-वाचकानि सूर्यादेस्तादृशमूर्तित्वाभावात् तारानाशनक्रियत्वेन तत्साहित्यशोभित्वाभावात् सुख-विशेषकररात्रिविलासाभावात् तादृशविज्ञत्वानभिव्यक्तेश्चेति ।

सिद्धान्तरसभावानां ध्वन्यलंकारयोरपि ।
अनन्तत्वात्स्फुटत्वाच्च व्यज्यते दुर्गमं त्विह ॥
लिखनं सर्वमेवास्मिन्नाशङ्कानाशगर्भितम् ।
वृथात्वशङ्कया तत्र नावध्येयमबुद्धिभिः ॥
ग्रन्थकृतां स्वारस्यात् कतिचित्पाठास्तु ये त्यक्ताः ।
नाऽत्राऽनिष्टं चिन्त्यं चिन्त्यं तेषामभीष्टं हि ॥ १ ॥

अथ निजभक्तिप्रवर्तनेन कलियुगपावनावतारं विशेषतः स्वाश्रयचरणकमलं श्रीश्रीकृष्ण-चैतन्यदेवं भगवन्तं नमस्करोति—हृदीति । हृदि यस्य प्रेरणया प्रवर्तितोऽस्मिन् संदर्भ इति शेषः । वराकेति स्वयं दैन्येनोक्तम् । सरस्वती तु तदसहमाना वरं श्रेष्ठम् आ सम्यक् कायति शब्दायत इति तमेव तं स्तावयति । सत्कवितायामपि तत्प्रेरणयैवात्र प्रवृत्तिः स्यान्ना-न्यथेत्यपेरर्थः ॥ २ ॥

अथ निजेष्टदेवावतारत्वेन निजगुरुं स्तुवन् प्रार्थयते—विश्रामेति ।

---

१ विश्राम इति । यद्यप्यस्य प्रयोगस्यापाणिनीयत्वेन प्रयोगानर्हताऽभियुक्तैर्ध्वनिता, तथापि प्रयोगस्यापि प्रामाणिकत्वेन व्यवस्थाप्यतौचित्यमावहति ।

तत्रापाणिनीयत्वं त्वित्थम्—उदात्तोपदेशस्य श्रमेर्घञि "नोदात्तोपदेशस्य मान्तस्यानाचमेः" इति सूत्रेण वृद्धिनिषेधे विश्रमेण भाव्यम् । न च 'रजो विश्रामयन् राज्ञाम्', 'धुर्यान् विश्रामयेति सः'—इतिवद् णिजन्तादेरचि निर्वाह इति सांप्रतम् ; "नोदात्तोपदेशस्य" इत्यत्र "आतो युग्" इत्यादितः कृतीत्यस्यानुवृत्त्या णिचि वृद्धिनिषेधाप्रसक्त्या दृष्टान्तवैषम्याद्, 'मितां ह्रस्वः' इत्यनेन विरुद्धो दृष्टान्त इत्युक्तिस्तु न सती, "वा चित्तविरागे"—इत्यतो वेत्यनुवृत्तौ व्यवस्थितविकल्पा-श्रयेण तत्र सामञ्जस्यात् । किन्तु णिच्यर्थवैलक्षण्यस्य दुष्परिहरता तदवस्थैवेति निवृत्तप्रेष-णात्साधुता समर्थनीयेति केचिद् ।

वस्तुतस्तु तस्याप्यगतितुल्यतया श्रमशब्दात्प्रज्ञाद्यणि विशब्देन "प्रादिभ्यो गताद्यर्थे प्रथमया" इत्यनेन विशिष्टः श्रामो विश्रामः प्राचार्यादिवत्समासेन सुसाधः । एतेन—

'रोगी चिरप्रवासी परान्नभोजी परावसथशायी ।
यज्जीवति तन्मरणं यन्मरणं सोऽस्य विश्रामः ॥' इत्यादिकमपि व्याख्यातम् ।

अपाणिनीयत्वोक्तिस्तु कामवामादिजातीयसाधुतात्पर्यिकेति वैयाकरणरूपा विदाङ्कुर्वन्तु ।

भक्तिरसामृतसिन्धुर्भवतु सदाऽयं प्रमोदाय ॥ ३ ॥

भक्तिरसामृतसिन्धौ चरतः परिभूतकालजालभियः[1] ।
भक्तमकरानशीलितमुक्तिनदीकान् नमस्यामि ॥ ४ ॥

---

भक्तिरसरूपस्यामृतस्य सिन्धुरिवेति तन्नामाऽयं ग्रन्थः तस्य श्रीकृष्णाख्यस्य मदीशस्य सदा स्वेनैव रूपेण स्थितस्यैव प्रकाशितनानारूपतनोर्या सनातननाम्नी तनुस्तस्या विश्राममन्दिरतया तत्तुल्यतयाऽङ्गीकारेणेत्यर्थः। अन्यस्या अपि नारायणाख्यायाः सदा प्रसिद्धसमानार्थसनातनतनोः सिन्धुर्विश्राममन्दिरं भवतीति ॥ ३ ॥

तदेवं नामग्राहं[2] तं वन्दित्वा स्वाभीष्टानन्यानपि सामान्यतः सद्भक्तान् वन्दते— भक्तिरसेति। भक्ता एव मकरा मीनराजाख्या जलचरास्तान्नमस्यामि। मकरत्वेन रूपके[3] सादृश्यत्रयमाह—भक्तिरस एवामृतसिन्धुर्नानाविधभक्तिनदीनामाश्रयः परमपरमानन्दः तस्मिन् चरतो विहरतोऽतो न शीलिता नाऽऽदृता मुक्तिरेव नदी तद्रूपतया निरूपितं जन्ममरणादिबन्धच्छेदकमप्यनवच्छिन्नप्रवाहमपि ब्रह्मकैवल्यादिसुखं यैस्तान्। अनादृतेत्येव वा पाठः। अत एव परिभूतं जन्ममरणादिबन्धदुःखपरम्पराहेतोः कालरूपाज्जालाद्भयं यैस्तान्।

सालोक्यसार्ष्टिसारूप्येत्यादेर्मत्सेवया प्रतीतं त इत्यादेश्च पूर्वहेतोरेव परिभूतं जन्म-

---

१ अत्र मानं तु—

न कर्हिचिन्मत्पराः शान्तरूपे नङ्क्ष्यन्ति नानिमिषो लेढि हेतिः।
येषामहं प्रिय आत्मा सुतश्च सखा गुरुः सुहृदो दैवमिष्टम् ॥

तथा—

त्वां सेवतां सुरकृता बहवोऽन्तरायाः स्वौको विलङ्घ्य परमं व्रजतां पदं ते।
नान्यस्य बर्हिषि बलीन् ददतः स्वभागान् धत्ते पदं त्वमविता यदि विघ्नमूर्ध्नि ॥
इत्यादिश्रीमद्भागवतादि।

२ नामग्राहमिति। णमुलन्तत्वेन त्वत्र न भ्रमितव्यम्, तद्विधायकेन "समूलाकृतजीवेषु हन्कृञ्ग्रहः" इत्यनेन जीवोपपदादेव ग्रहेस्तद्विधानात्, "कषादिषु यथाविध्यनुप्रयोगः" इत्यनेन तस्यैवानुप्रयोगाच्च। तस्माद् व्यधिकरणबहुव्रीहिगर्भं वन्दनक्रियाविशेषणं ज्ञेयम्।

३ रूपक इति। अत्रेदं चिन्तनीयम्—रूपक इत्यस्य तस्यैव विशेषे परिणाम इत्यर्थः। विषयिणां मकराणां तादृशसिन्धौ चरणकर्तृत्वपरिभूतकालजालभीकत्वाशीलितमुक्तिनदीकत्वानि न हि स्वरूपेण सम्भवन्ति, किन्तु विषयतापन्नभक्ततादात्म्यापत्त्यैवेति युक्तं भाति।

स्पष्टं चैतद्—

न नाकपृष्ठं न च सार्वभौमं न पारमेष्ठ्यं न रसाधिपत्यम्।
न योगसिद्धीरपुनर्भवं वा समञ्जस त्वां विरहय्य काङ्क्षे ॥

इत्यादिपरमहंससंहितादितः।

मीमांसकवडवाग्नेः कठिनामपि कुण्ठयन्नसौ जिह्वाम् ।
स्फुरतु सनातन सुचिरं तव भक्तिरसामृताम्भोधिः ॥ ५ ॥
भक्तिरसस्य प्रस्तुतिरखिलजगन्मङ्गलप्रसङ्गस्य ।
अज्ञेनापि मयाऽस्य क्रियते सुहृदां प्रमोदाय ॥ ६ ॥
एतस्य भगवद्भक्तिरसामृतपयोनिधेः ।
चत्वारः खलु वक्ष्यन्ते भागाः पूर्वादयः क्रमात् ॥ ७ ॥
तत्र पूर्वे विभागेऽस्मिन् भक्तिभेदनिरूपके ।
अनुक्रमेण वक्तव्यं लहरीणां चतुष्टयम् ॥ ८ ॥
आद्या सामान्यभक्त्याढ्या द्वितीया साधनाङ्किता ।
भावाश्रिता तृतीया च तुर्या प्रेमनिरूपिका ॥ ९ ॥

---

मरणादिबन्धदुःखपरम्पराहेतोः कालरूपाज्जालाद् भयं यैस्तान्, 'नैषां वयं न च वयः प्रभवाम दण्डे' इत्युक्तेः ॥ ४ ॥

अथ निजग्रन्थस्य विरोधिकृतपराभवाभावकरीं सदास्फूर्तिं श्रीगुरुचरणान् प्रार्थयते—मीमांसकेति ।

मीमांसको द्विविधः—कर्मज्ञानविचारभेदेन, वडवाऽग्नेर्जिह्वा ज्वाला तद्भेदेनैवाग्नेः सप्तजिह्वत्वेन प्रसिद्धेः, तां यथा कुण्ठयन्नम्भोधिर्वर्तते तथाऽयमपि मीमांसकानां वचनशक्तिमित्यर्थः । तत्कुण्ठनातिशयविवक्षायामेव तात्पर्याद् । उभयत्रापि तदीयरसस्वाभाव्यादिति भावः । अथवाऽन्याम्भोधितो विलक्षणत्वमत्रोक्तं सिन्धावन्यत्र वडवाऽग्नेः स्वाभाविकी स्थितिरत्र तु मीमांसकस्य यथा कथंचिदागन्तुकी स्यादित्याशङ्क्य तदेव प्रार्थितम् ॥ ५ ॥

मम पुनरनुकूलानां प्रतिकूलानां च पण्डितानां समाधाने न शक्तिः, किन्त्वेतदर्थमेवेदं क्रियते इत्याह—भक्तिरसस्येति ।

अज्ञेनेति । पूर्ववद्दैन्येऽपि न विद्यते ज्ञो यस्मात्तेनेति ज्ञेयम् । अपिरत्र स्वतः प्रयोजनाभावं व्यञ्जयति ॥ ६ ॥

अथ ग्रन्थमारब्धुं तत्परिपाटीं दर्शयति—एतस्येति चतुर्भिः ।

---

१ मीमांसकेत्युक्तिः=ये भजनीयतमं भगवन्तमेव रसनाभिर्नोपगच्छन्ति तदीया एव रसनाः कुण्ठयितव्या इति भगवद्विद्वेष्युपलक्षणपरा ज्ञेया, वह्निविशेषारोपस्य रूपकविशेषानुरोधतः ।

स्फुटमेतत्—

श्रेयःसृतिं भक्तिमुदस्य ते विभो ! क्लिश्यन्ति ये केवलबोधलब्धये ।
तेषामसौ क्लेशल एव शिष्यते नान्यद्यथा स्थूलतुषावघातिनाम् ॥

इत्यादितत्रत्यादिमानैः ।

तत्रादौ सुष्ठु वैशिष्ट्यमस्याः कथयितुं स्फुटम् ।
लक्षणं क्रियते भक्तेरुत्तमायाः सतां मतम् ॥ १० ॥
अन्याभिलाषिताशून्यं ज्ञानकर्माद्यनावृतम् ।
आनुकूल्येन कृष्णानुशीलनं भक्तिरुत्तमा ॥ ११ ॥

---

तत्रादाविति । तत्र=पूर्वविभागगतप्रथमलहर्य्याम्, आदौ=प्रथमत एवोत्तमाया भक्तेर्लक्षणं क्रियते प्रतिपाद्यतयाऽभिधीयते, न तु सर्वात्मिकायाः । तत्र हेतुः–सुष्ठु वैशिष्ट्यं कथयितुमिति । अन्यत्रान्याभिलाषज्ञानकर्माद्यावृतत्वेनापूर्णबलत्वादेतदंशत एवास्यास्तादृशत्वव्यक्तेः, 'यस्यास्ति भक्तिर्भगवत्यकिंचना' इत्यादेश्च ॥ ७–१० ॥

अथ तस्या लक्षणं वदन्नेव ग्रन्थमारभते–अन्येति ।

अनुशीलनमत्र क्रियाशब्दवद्धात्वर्थमात्रमुच्यते[1], धात्वर्थश्च द्विविधः[2]–प्रवृत्तिनिवृत्त्यात्मकः कायवाङ्मानसीयस्तत्तच्चेष्टारूपः; प्रीतिविषादात्मको मानसस्तत्तद्भावरूपः, सत्ताऽसत्ते तु परस्परोपमर्दितत्वाच्चेष्टान्तर्गते एव । तदेवं सति कृष्णसम्बन्धि कृष्णार्थं वाऽनुशीलनमिति तत्सम्बन्धमात्रस्य [3]तदर्थस्य वा विवक्षितत्वाद् गुरुपादाश्रयादौ; भावरूपस्यापि क्रोडीकृतत्वात् स्थायिनि व्यभिचारिषु च भावेषु नाव्याप्तिः । एतच्च कृष्णतद्भक्तकृपयैव लभ्यं श्रीभगवतः स्वरूपशक्तिवृत्तिरूपमतोऽप्राकृतमपि कामादिवृत्तितादात्म्येनैवाविर्भूतमिति ज्ञेयम् । अग्रे तु स्पष्टीकरिष्यते । कृष्णशब्दश्चात्र स्वयं भगवतः श्रीकृष्णस्य तद्रूपाणां चान्येषामपि ग्राहकः । तारतम्यञ्चाग्रे विवेचनीयम् । तत्र भक्तिमात्रत्वसिद्ध्यर्थं विशेषणमानुकूल्येनेति, प्रातिकूल्ये भक्तित्वाप्रसिद्धेः । आनुकूल्यं चास्मिन्नुद्देश्याय श्रीकृष्णाय रोचमाना प्रवृत्तिः, प्रातिकूल्यं तु तद्विपरीतं ज्ञेयम् । तृतीया चेयं विशेषण एव न तूपलक्षणे, ततश्च यथा शस्त्रिणः समानयेत्युक्ते शस्त्राणामपि समानयनं प्रसज्यते तथाऽऽनुकूल्यस्यापि भक्तित्वविधानम्; न तु शस्त्रिणो भोजयेत्यत्र शस्त्राणामभोजनवदविधानम् ।

नन्वानुकूल्यं भक्तिरित्येवास्ताम् । ततश्च राजाऽयं गच्छतीत्यत्र राजपदेन तत्परिकराणां ग्रहणमिव तत्परिकराणां ग्रहणं स्यात् ? सत्यम्, तथापि धात्वर्थभेदानां स्पष्टा प्रतिपत्तिर्न स्यादिति धात्वर्थमात्रग्रहणायानुशीलनं पदमुपादीयते । अन्विति पदं चानुकूल्ये जाते मुहुरेव शीलनं स्यादित्यभिप्रायेण कृतम् । तदेतत्स्वरूपलक्षणम् । उत्तमत्वसिद्ध्यर्थं तु तटस्थलक्षणेन

---

१ धात्वर्थमात्रमिति । यद्यपि धात्वर्थत्वस्य "फलव्यापारयोर्धातुः"इत्यभियुक्तोक्त्या फलांशेऽप्यविशिष्टत्वं, तथापि प्राधान्याद् यथा क्रियापदाद् व्यापार एव परामृश्यते तथा प्रकृते शीलनपदेनापीत्यर्थः ।

२ द्विविध इति । एवमुक्तिः स्पन्दाभिप्रायेण, न तु साध्यत्वेन परिणामाभिप्रायिका, तथात्वे द्वैविध्यानुपपत्तेः ।

३ तदर्थस्येति । तदुद्देश्यकस्येति भावः । पूर्वकल्पे सम्बन्धस्य साक्षात्त्वे वक्ष्यमाणाव्याप्तेस्तादवस्थ्यात्, पारम्परिकत्वेऽतिप्रसङ्गादरुचेः कल्पान्तरानुसरणम् ।

रामाणां शतमपि नोद्भटोग्रधामा श्रीदामा गणयति रे त्वमत्र कोऽसि ॥

*अत्रापि गौणेऽङ्गिनि मुख्यस्य । रौद्रे प्रेयोवीरयोर्यथा—*

यदुनन्दन निन्दनोद्धतं शिशुपालं समरे जिघांसुभिः ।
अतिलोहितलोचनोत्पलैर्जगृहे पाण्डुसुतैर्वरायुधम् ॥

*अत्र गौणे मुख्यगौणयोः । अद्भुते प्रेयोवीरहास्यानां यथा—*

मित्रानीकवृतं गदायुधि गुरुंमन्यं प्रलम्बद्विषं
यष्ट्या दुर्बलया विजित्य पुरतः सोल्लुण्ठमुद्गायतः ।
श्रीदाम्नः किल वीक्ष्य केलिसमराटोपक्रमे पाटवं
कृष्णः फुल्लकपोलकः पुलकवान् विस्फारदृष्टिर्बभौ ॥

*अत्र गौणे मुख्यस्य गौणयोश्च ।*

**एवमन्यस्य गौणस्य ज्ञेया कविभिरङ्गिता ।**
**तथाऽत्र मुख्यगौणानां रसानामङ्गताऽपि च ॥ २१ ॥**
**सोऽङ्गी सर्वातिगो यः स्यान्मुख्यो गौणोऽथवा रसः ।**
**स एवाङ्गं भवेदङ्गिपोषी संचारितां व्रजन् ॥ २२ ॥**

*तथा च नाट्याचार्याः पठन्ति—*

"एक एव भवेत्स्थायी रसो मुख्यतमो हि यः ।
रसास्तदनुयायित्वादन्ये स्युर्व्यभिचारिणः ॥"

*श्रीविष्णुधर्मोत्तरे च—*

"रसानां समवेतानां यस्य रूपं भवेद्बहु ।
स मन्तव्यो रसः स्थायी शेषाः संचारिणो मताः ॥" इति ।

**स्तोकाद्विभावनाज्जातः सम्प्राप्य व्यभिचारिताम् ।**
**पुष्णन्निजप्रभुं मुख्यं गौणस्तत्रैव लीयते ॥ २३ ॥**

---

अत्रापीत्यत्र मुख्यस्येति । श्रीदाम्नो रामप्रतियोद्धुः कृष्णपक्षप्रवेशेन तत्सख्ये स्पष्टताप्रतिपत्तेः ।

मित्रानीकमिति कस्यचिदन्यस्य सख्युर्वाक्यम् । अस्यैव चैते रसा उदाहार्याः; न तु श्रीकृष्णस्य । भक्तिरसस्यैव प्रकृतत्वाद् दुर्बलया यष्ट्या विजित्येति शिक्षाविशेषाधिक्यमभिप्रेतम् । सखित्वेनाङ्गीकृतेषु सम्भवति च तत्तदिति । समरारोपक्रम इत्येव पाठः ।

रूपं स्वरूपम् , बहु अधिकम् । "शेषाः संचारिणो मताः" इति तन्मतेऽपि स्वस्वाधाराद्व्यभिचारिणौ शृङ्गारशान्तौ संचारिणाविव, स्वास्वाधाराद् व्यभिचारिणो हास्यादयस्तु संचारिण एवेति भेदांशे लब्धेऽपि यथा पोषकतांशेनाभेदविवक्षा तथाऽत्रापि स "एवाङ्गम्" इत्यादिनोक्तमिति दर्शितम् ।

प्रोद्यन्विभावनोत्कर्षात्पुष्टिं मुख्येन लम्भितः ।
कुञ्चता निजनाथेन गौणोऽप्यङ्गित्वमश्नुते ॥ २४ ॥
मुख्यस्त्वङ्गत्वमासाद्य पुष्णन्निन्द्रमुपेन्द्रवत् ।
गौणमेवाङ्गिनं कृत्वा निगूढनिजवैभवः ॥ २५ ॥
अनादिवासनोद्भासवासिते भक्तचेतसि ।
भात्येव न तु लीनः स्यादेष संचारिगौणवत् ॥ २६ ॥
अङ्गं मुख्यः स्वमत्राङ्गैर्भावैस्तैरभिवर्द्धयन् ।
सजातीयैर्विजातीयैः स्वतन्त्रः सन् विराजते ॥ २७ ॥
यस्य मुख्यस्य यो भक्तो भवेन्नित्यनिजाश्रयः ।
अङ्गी स एव तत्र स्यान्मुख्योऽप्यन्योऽङ्गतां व्रजेत् ॥ २८ ॥

*किञ्च—*

आस्वादोद्रेकहेतुत्वमङ्गस्याङ्गत्वमङ्गिनि ।
तद्विना तस्य सम्पातो वैफल्यायैव कल्पते ॥ २९ ॥
यथा मृष्टरसालायां यवसादेः कथंचन ।
तच्चर्वणे भवेदेव सतृणाभ्यवहारिता ॥ ३० ॥

*अथ वैरिकृत्यम्—*

जनयत्येव वैरस्यं रसानां वैरिणा युतिः ।
सुमृष्टपानकादीनां क्षारतिक्तादिना यथा ॥ ३१ ॥

*तथा हि—*

ब्रह्मज्ञाया निष्फलं मे व्यतीतः कालो भूयान् हा समाधिव्रतेन ।
सान्द्रानन्दं तन्मया ब्रह्म मूर्तं कोणेनाक्ष्णः साचि सव्यस्य नैक्षि ॥

*अत्र शान्तस्योज्ज्वलेन वैरस्यम् ।*

क्षणमपि पितृकोटिवत्सलं तं सुरमुनिवन्दितपादमिन्दिरेशम् ।
अभिलषति वराङ्गनानखाङ्कैः स्फुरिततनुं प्रभुमीक्षितुं मनो मे ॥

---

अनादीत्युपलक्षणं पूर्वसिद्धत्वे तात्पर्यम् , संचारिगौणवदिति व्यतिरेके दृष्टान्तः संचारिवद् गौणवच्च नेत्यर्थः ।

स्वमत्राङ्गैरित्येव पाठः । विजातीयैः शत्रुवर्जितैः कैश्चित् पूर्वदर्शितैरन्यैरपि ।

मुख्यस्येति । लीलाभेदेन प्रकटितनिजमुख्यताविशेषस्येत्यर्थः ।

अङ्गिनि यदङ्गस्याङ्गत्वं तत्खल्वास्वादोद्रेकहेतुत्वमेव नान्यदित्यर्थः । तदेव दर्शयति—तद्विनेति ।

*अत्र प्रीतस्योज्ज्वलेनैव ।*

दोर्भ्यामर्गलदीर्घाभ्यां सखे परिरभस्व माम् ।
शिरः कृष्ण तवाघ्राय विहरिष्ये ततस्त्वया ॥

*अत्र प्रेयसो वत्सलेन ।*

यं समस्तनिगमाः परमेशं सात्वतास्तु भगवन्तमुशन्ति ।
तं सुतेति बत साहसिकीं त्वां व्याजिहीर्षतु कथं मम जिह्वा ॥

*अत्र वत्सलस्य प्रीतेन ।*

तडिद्विलासतरला नवयौवनसम्पदः ।
अद्यैव दूति तेन त्वं मया रमय माधवम् ॥

*अत्रोज्ज्वलस्य शान्तेन ।*

चिरं जीवेति संयुज्य काचिदाशीर्भिरच्युते ।
कैलासस्था विलासेन कामुकी परिषष्वजे ॥

*अत्र शुचेर्वत्सलेन ।*

**शुचेः सम्बन्धगन्धोऽपि कथंचिद्यदि वत्सले ।**
**क्वचिद् भवेत्ततः सुष्ठु वैरस्यायैव कल्पते ॥ ३२ ॥**

पिशितास्रमयी नाहं सत्यमस्मि तवोचिता ।
स्वापाङ्गविद्धां श्यामाङ्ग कृपयाऽङ्गीकुरुष्व माम् ॥

*अत्र शुचेर्बीभत्सेन ।*

**एवमन्याऽपि विज्ञेया प्राज्ञै रसविरोधिता ।**
**प्रायेणेयं रसा भासकक्षायां पर्यवस्यति ॥ ३३ ॥**

*किञ्च—*

**द्वयोरेकतरस्येह बाध्यत्वेनोपवर्णने ।**
**स्मर्यमाणतयाप्युक्तौ साम्येन रचनेऽपि च ॥ ३४ ॥**

---

समस्तनिगमा इति । "तत्तु समन्वयात्" इति न्यायेन समस्तं निगमयन्ति निगमार्थं समस्तं समन्वितं कुर्वन्ति ये ते वेदान्तिन इत्यर्थः । परमेशं परब्रह्मपर्यायम् । सात्वताः पाञ्चरात्रिकाः । भगवन्तं वासुदेवपर्यायम् ।

चिरञ्जीवेत्युदाहरणाय कल्पनामात्रम् । एवमन्यत्रापि ज्ञेयम् ।

प्रायेणेति । केचिद्रसाभासादप्यधमकक्षायां पर्यवस्यन्तीत्यर्थः ।

बाध्यत्वं बाधयोग्यत्वम् । अयमत्र बाधयोग्यो भवतीत्युपवर्णने युक्तिसंवलिततया निरूपण इत्यर्थः । अतो बाधाया अयोग्यस्य तथा वर्णनं तु वैरस्यमेवेति भावः । अपिशब्दस्य

**रसान्तरेण व्यवधौ तटस्थेन प्रियेण वा ।**
**विषयाश्रयभेदे च गौणेन द्विषता सह ॥ ३५ ॥**
**इत्यादिषु न वैरस्यं वैरिणोर्जनयेद्युतिः ।**

*तत्रैकतरस्य बाध्यत्वेन वर्णने यथा विदग्धमाधवे—*

प्रत्याहृत्य मुनिः क्षणं विषयतो यस्मिन्मनो धित्सते ।
बालाऽसौ विषयेषु धित्सति ततः प्रत्याहरन्ती मनः ॥
यस्य स्फूर्तिलवाय हन्त हृदये योगी समुत्कण्ठते ।
मुग्धेयं किल तस्य पश्य हृदयान्निष्क्रान्तिमाकाङ्क्षति ॥

**बाध्यत्वमत्र शान्तस्य शुचेरुत्कर्षवर्णनात् ॥ ३६ ॥**

*स्मर्यमाणत्वे यथा—*

स एष वैहासिकताविनोदैर्व्रजस्य हासोद्गमसंविधाता ।
फणीश्वरेणाद्य विकृष्णमाणः करोति हा नः परिदेवनानि ॥

*साम्येन वचने यथा—*

विश्रान्तषोडशकला निर्विकल्पा निरावृतिः ।
सुखात्मा भवती राधे ब्रह्मविद्येव राजते ॥

---

सम्भववचनत्वाद्धासादौ करुणस्मरणं वैरस्यायैवेति बोध्यम् । द्वितीयोऽप्यपिशब्दः पूर्ववद् अतो वर्णनीयानां श्रृङ्गारादीनां बीभत्सादिभिः सामान्यवचनमनुचितम् । अपिशब्दस्य द्विरुक्तया रसान्तरेणेत्यादौ च व्यभिचारो द्रष्टव्यः, वत्सलादीनां वैरियोगे व्यवधानशतेनापि वैरस्याभावानुपपत्तेः । विषयाश्रयभेदेन यत्र भक्तिरसिकाभीष्टस्य रसविशेषस्यान्यत्र समतां दर्शयद्भिरन्यैः प्रतीतोत्तमत्वेऽपि भक्तिरसिकैर्बीभत्सितत्वमुद्भाव्यते तत्रैव; न तूभयैरेव बीभत्सिततया ज्ञातेऽपीत्यादि ज्ञेयम् ।

प्रत्याहृत्येति । अत्र पूर्वार्द्धे मुनेर्बालायाश्च प्रथमा निष्ठा । उत्तरार्द्धे योगिनस्तस्याश्च स्फुटमुत्तरा ।

बाध्यत्वमिति । पूर्वपद्ये श्रीराधामाधवरहस्यसहायया पौर्णमास्याख्यतपस्विन्या रसद्वयं भावितम्—मुन्याद्यनुसारेण शान्तः, श्रीराधानुसारेण शुचिः । तत्र मुनियोगिनोर्योगबलेन प्रवर्त्त्यमानस्यापि मनसस्तत्राप्रवृत्तेः श्रीराधाया धर्मभयेन रुद्ध्यमानस्यापि तस्मिन्प्रवृत्तेः पूर्वस्य निकर्षः परस्य तु प्रकर्षः स्पष्ट एवेति, किन्त्वीदृग्वर्णनं वक्तृभेदेनैवादोषाय ज्ञेयं न तु सर्वत्र ।

स एष इति पद्यं केषांचित् क्षोदिष्ठदिविष्ठानामेव वचनम् । यदिदमतिस्निग्धस्वभावानां नेति लक्ष्यते । व्रजस्थानां तु सुतराम् । तदा वैहासिकादिशब्दानां प्रयोगानौचित्याद् । न चेदं ब्रह्मशिवादीनाम् , तेषां स्वयंभगवत्त्वज्ञानात् ।

विश्रान्ताः प्राप्तविश्रमाः, षोडश कला रचनाः श्रृङ्गारा यस्याम् , पक्षे विश्रान्तं निरुद्यमं षोडशकलं लिङ्गशरीरं यस्याम्, निर्विकल्पा सुष्ठु प्रत्यक्षतया निर्णीता, पक्षे भेदरहिता तत्र हेतु-

*यथा वा—*

राधा शान्तिरिवोन्निद्रं निर्निमेषेक्षणं च माम्।
कुर्वती ध्यानलग्नं च वासयत्यद्रिकन्दरे॥

*रसान्तरेण व्यवधौ यथा—*

त्वं काऽसि शान्ता किमिहान्तरिक्षे द्रष्टुं परं ब्रह्म कुतस्तताक्षी।
अस्यातिरूपात् किमिवाकुलात्मा रम्भे समारम्भि भिदा स्मरेण॥

*अत्राद्भुतेन व्यवधिः। विषयभिन्नत्वे यथा श्रीदशमे—*

त्वक्श्मश्रुरोमनखकेशपिनद्धमन्तर्मांसास्थिरक्तकृमिविट्कफपित्तवातम्।
जीवच्छवं भजति कान्तमतिर्विमूढा या ते पदाब्जमकरन्दमजिघ्रती स्त्री॥

*यथा वा विदग्धमाधवे—*

तस्याः कान्तद्युतिनि वदने मञ्जुले चाक्षियुग्मे
तत्रास्माकं यदवधि सखे दृष्टिरेषा निविष्टा।
सत्यं ब्रूमस्तदवधि भवेदिन्दुमिन्दीवरं च
स्मारं स्मारं मुखकुटिलताकारिणीयं हृणीया॥

*उभयत्र शुचिबीभत्सयोः। आश्रयभिन्नत्वे यथा—*

विजयिनमजितं विलोक्य रङ्गस्थलभुवि सम्भृतसांयुगीनलीलम्।
पशुपसवयसां वपूंषि भेजुः पुलककुलं द्विषतां तु कालिमानम्॥

*अत्र वीरभयानकयोः।*

**विषयाश्रयभेदेऽपि मुख्येन द्विषता सह।**
**सङ्गतिः किल मुख्यस्य वैरस्यायैव जायते॥ ३७॥**

*तत्र विषयभेदे यथा—*

विमोचयार्गलाबन्धं विलम्बं तात नाचर।

---

निरावृतिः लतादिव्यवधानरहिता पक्षे गुणावरणशून्या ब्रह्मविद्या ब्रह्मानुभवः तदेतद्विधमपि वर्णनं नर्ममयमेव रसाय सम्पद्यत इति तथोदाहृतम्, मुक्तिश्रीरिवेति पाठस्तु त्यक्तः।

त्वं काऽसीति। अत्र रूपस्यात्यद्भुततया तस्याः शान्तिरतिमाच्छाद्य मधुररतिरुद्भाविता। व्यवधिशब्दस्याप्येतावानत्रधिः साक्षात्स्मरोक्त्या तु यद्वैरस्यं तत्खलु न निषिध्यते, किन्तु शान्तसङ्गेन यत्तदेवेति भावः। एवमन्यत्रापि।

स्मारं स्मारमिति हृणीयेति द्वयमप्यस्माकमित्यस्यैककर्तुः क्रियाद्वये चास्मिन् स्मृति-क्रियायाः पूर्वत्वाद् णमुल् युज्यत एव, काश्यः सान्दीपनिः।

भीतेन तस्याः पितृविषयेण, भावनाविशेषे त्वत्रापि न दोषः, यथा—

"अहं त्रयीमयाज्जाता सात्त्वतानां पतिः स तु।
तस्मादन्यो वरः को वा ममालम्बाय कल्पताम्" इति।

यामि काश्यगृहं यूना मनः श्यामेन मे हृतम् ॥

*अत्र शुचेः प्रीतेन । आश्रयभेदे यथा—*

रुक्मिणीकुचकाश्मीरपङ्किलोरःस्थलं कदा ।
सदानन्दं परं ब्रह्म दृष्ट्या सेविष्यते मया ॥

*अत्र शान्तस्य शुचिना ।*

**अनुरक्तधियो भक्ताः केचन ज्ञानवर्त्मनि ।**
**शान्तस्याश्रयभिन्नत्वे वैरस्यं नानुमन्वते ॥ ३८ ॥**

*किञ्च—*

**भृत्ययोर्नायकस्येव निसर्गद्वेषिणोरपि ।**
**अङ्गयोरङ्गिनः पुष्टौ भवेदेकत्र सङ्गतिः ॥ ३९ ॥**

*यथा—*

कुमारस्ते मल्लीकुसुमसुकुमारः प्रियतमे
गरिष्ठोऽयं केशी गिरिवदिति मे वेल्लति मनः ।
शिवं भूयात्पश्योन्नमितभुजमेधिर्मुहुरमुं
खलं क्षुन्दन् कुर्यां व्रजमतितरां शालिनमहम् ॥

*अत्र विद्विषौ वीरभयानकौ वत्सलं पुष्णीतः । यथा वा—*

"कम्प्रास्वेदिनि चूर्णकुन्तलतटे" इत्यादि ।

*अत्र हास्यकरुणौ वत्सलमेव पुष्णीतः । अपि च—*

**मिथो वैरावपि द्वौ यौ भावौ धर्मसुतादिषु ।**
**कालादिभेदात्प्राकट्यं तौ विन्दन्तौ न दुष्यतः ॥ ४० ॥**

---

त्रयीमयात् सूर्यात् ।

रुक्मिणीति । एषाऽत्र शुचेराश्रयः, वक्ता तु शान्तस्य, रुक्मिणीत्यादि भावनायां त्वेष शुचेराश्रयः स्यादिति पक्षे तु सुतरामेव दोष इति भावः ।

कुमार इत्यादौ विषयभेदोऽप्यपेक्ष्यते, शालिनं श्लाघिनम् । शाल श्लाघायाम् । मेधिः-धान्यपलालपार्थक्याय भ्राम्यमाणबलीवर्दबन्धस्तम्भः ।

कम्प्रेत्यादौ किञ्चित्कालभेदोऽपि दृश्यते ।

मिथो वैरावपीति । तद्भावयोग्येषु तेषु भावभेदस्य यथाकालमुदयाद् । धर्मसुते हि प्रीतो वात्सल्यं सख्यं च दृश्यते, योग्यता च तदीश्वरताज्ञानित्वाज्ज्येष्ठभ्रातृत्वाज्ज्ञातिज्येष्ठभ्रातृत्वाच्च यथा श्रीबलदेवस्य । दोषत्वं खल्वयोग्य एव विधीयते तस्मान्न तेषु दोषः किन्त्वन्यत्रैवेत्यर्थः ।

**अधिरूढे महाभावे विरुद्धैर्विरसा युतिः।**
**न स्यादित्युज्ज्वले राधाकृष्णयोर्दर्शितं पुरा॥ ४१॥**
**क्वाप्यचिन्त्यमहाशक्तौ महापुरुषशेखरे।**
**रसावलिसमावेशः स्वादायैवोपजायते॥ ४२॥**

*तत्र रसानां विषयत्वे यथा ललितमाधवे—*

दैत्याचार्यास्तदाऽऽस्ये विकृतिमरुणतां मल्लवर्याः सखायो
गण्डौन्नत्यं खलेशाः प्रलयमृषिगणा ध्यानमुष्णास्रमम्बाः।
रोमाञ्चं सांयुगीनाः कमपि नवचमत्कारमन्तः सुरेशा
लास्यं दासाः कटाक्षं ययुरसितदृशः प्रेक्ष्य रङ्गे मुकुन्दम्॥

*आश्रयत्वे यथा—*

स्वस्मिन् धुर्येऽप्यमानी शिशुषु गिरिधृतावुद्यतेषु स्मितास्यः
थूत्कारी दध्नि विस्रे प्रणयिषु विवृतप्रौढिरिन्द्रेऽरुणाक्षः।
गोष्ठे साश्रुर्विदूने गुरुषु हरिमखं प्रास्य कम्प्रः स पाया-
दासारे स्फारदृष्टिर्युवतिषु पुलकी बिभ्रदद्रिं विभुर्वः॥

इति भक्तिरसामृतसिन्धावुत्तरविभागे रसानां मैत्रीवैरस्थिति लहरी अष्टमी॥ ८॥

---

ये वा केचित्प्रयोगाः श्रीभागवते विरुद्धा इव दृश्यन्ते तत्समाधानं तु श्रीभागवतसन्दर्भे कृतमस्ति।

दर्शितं पुरेति। 'घोराखण्डितशङ्खचूडम्' इत्यादौ।

क्वाप्यचिन्त्येति। विषयत्वेन प्रायः स्वादो न विहन्यते, आश्रयत्वेऽपि स्वादायैव स्यादित्यर्थः।

दैत्याचार्याः कंसपुरोहिताः। तदा तदानीम्। आस्ये मुखे विकृतिं कूणनादिकम् ययुः गजरक्तमदादिलिप्तत्वं दृष्ट्वेति भावः। अनेन बीभत्सः, सखाय इत्यनेन हास्यः प्रेयांश्चेति रसद्वयम्, प्रलयम् भयेन नष्टचेष्टताम्, ध्यानं ध्यानावस्थानमेव साक्षाद्ययुः, अनेन शान्तः, अम्बाः देवक्यादयः, एतेन वत्सलः करुणश्च।

अमानीति निरहङ्कारतया शान्त उक्तः, कम्प्र इत्यनेन भयानकः, एवमन्ये ज्ञेयाः। प्रास्य खण्डयित्वा॥ १–३९॥

इत्युत्तरविभागे नवलहर्यात्मके मैत्रीवैरस्थितिलहर्यष्टमी॥



# अथ रसाभासाः

पूर्वमेवानुशिष्टेन विकलाः रसलक्ष्मणा ।
रसा एव रसाभासा रसज्ञैरनुकीर्तिताः ॥ १ ॥
स्युस्त्रिधोपरसाश्चानुरसाश्चापरसाश्च ते ।
उत्तमा मध्यमाः प्रोक्ताः कनिष्ठाश्चेत्यमी क्रमात् ॥ २ ॥

*तत्रोपरसाः—*

प्राप्तैः स्थायिविभावानुभावाद्यैस्तु विरूपताम् ।
शान्तादयो रसा एव द्वादशोपरसा मताः ॥ ३ ॥

*तत्र शान्तोपरसः—*

ब्रह्मभावात्परब्रह्मण्यद्वैताधिक्ययोगतः ।
तथा बीभत्सभूमादेः शान्तो ह्युपरसो भवेत् ॥ ४ ॥

*तत्राद्यं यथा—*

विज्ञानसुषमाधौते समाधौ यदुदञ्चति ।
सुखं दृष्टे तदेवाद्य पुराणपुरुषे त्वयि ॥

*द्वितीयं यथा—*

यत्र यत्र विषये मम दृष्टिस्तं तमेव कलयामि भवन्तम् ।
यन्निरञ्जन परापरबीजं त्वां विना किमपि नापरमस्ति ॥

*अथ प्रीतोपरसः—*

कृष्णस्याग्रेऽतिधाष्टर्येन तद्भक्तेष्ववहेलया ।
स्वामीष्टदेवतोऽन्यत्र परमोत्कर्षवीक्षया ॥ ५ ॥
मर्यादातिक्रमाद्यैश्च प्रीतोपरसता मता ।

---

रसा इति । रसत्वेनापाततः प्रतीयमाना अपीत्यर्थः । रसस्य लक्ष्मणा लक्षणेन विकला विभावादिषु लक्षणहीनतया हीनाः ।

परब्रह्मणि "ब्रह्मणो हि प्रतिष्ठाहम्" इत्यादि प्रतिपादिते श्रीभगवति ब्रह्मभावाद् निर्विशेषतादृष्टेः, तथाद्वैताधिक्ययोगतः सर्वकारणेन तेन सह सर्वस्यात्यन्ताभेद इति मननात् तथा बीभत्सभूमादेर्निरन्तरं देहादौ जुगुप्साभावना, आदिग्रहणाच्चिदचिद्विवेकाच्चेति चेयम् । इतः परमुदाहरणान्येकदेशदर्शनादेव ज्ञापनीयानि ।

प्रथयन् वपुर्विवशतां सतां कुलैरवधीर्यमाणनटनोऽप्यनर्गलः ।
विकिर प्रभो दृशमिहेत्यकुण्ठवाक् चटुलो बटुर्व्यवृणुतात्मनो रतिम् ॥

*अथ प्रेयउपरसः—*

**एकस्मिन्नेव सख्येन हरिमित्राद्यवज्ञया ॥ ६ ॥**
**युद्धभूमादिना चापि प्रेयानुपरसो भवेत् ।**

*तत्राद्यं यथा—*

सुहृदित्युदितो भिया चकम्पे छलितो नर्मगिरा स्तुतिं चकार ।
स नृपः परिरिप्सितो भुजाभ्यां हरिणा दण्डवदग्रतः पपात ॥

*अथ वत्सलोपरसः—*

**सामर्थ्याधिक्यविज्ञानाल्लालनाद्यप्रयत्नतः ॥ ७ ॥**
**करुणस्यातिरेकादेस्तुर्यश्चोपरसो भवेत् ।**

*तत्राद्यं यथा—*

मल्लानां यदवधि पर्वतोद्भटानामुन्माथं सपदि तवात्मजादपश्यम् ।
नोद्वेगं तदवधि यामि जामि तस्मिन् द्राघिष्ठामपि समितिं प्रपद्यमाने ॥

*अथ शृङ्गारोपरसः । तत्र स्थायिवैरूप्यम्—*

**द्वयोरेकतरस्यैव रतिर्या खलु दृश्यते ॥ ८ ॥**
**याऽनेकत्र तथैकस्य स्थायिनः सा विरूता ।**
**विभावस्यैव वैरूप्यं स्थायिन्यत्रोपचर्यते ॥ ९ ॥**

*तत्रैकत्र रतिर्यथा ललितमाधवे—*

मन्दस्मितं प्रकृतसिद्धमपि व्युदस्तं सङ्गोपितश्च सहजोऽपि दृशोस्तरङ्गः ।

---

विवशतां प्रथयन् पृथुं कुर्वन्निति स्वल्पामपि तां पृथुतया दर्शयन्नित्यर्थः । प्रभो इति । श्रीकृष्णप्रतिमां प्रति संबोधनम् ।

एकस्मिन्नेव न तु मिथः ।

स नृप इति । श्रीहरेः पुत्र्याः पुत्रस्य वा श्वशुरः कश्चिदित्यर्थः ।

जामि हे भगिनि ।

विभावस्य आलम्बनरूपस्यैवेति क्वचित्तद्देहस्य क्वचित्तदन्तःकरणस्येत्यर्थः । स्वरूपतः स्थायिनो वैरूप्यायोगात् । तत्रैकतररत्युदाहरणे यज्ञपत्नीषु देहस्यैव वैरूप्यं ज्ञेयम्; ब्राह्मणदेहत्वात् तच्च तादृशीं रतिं विरूपयति । अनुचितेयमिति श्रीकृष्णरतिमपि नोद्गमयति, ततोऽन्यदोषस्यान्यत्र संक्रमणादुपचर्यत इत्युक्तम् । एकस्यानेकत्र रतिस्त्वन्तःकरणस्यैव वैरूप्यम् । एकन्नानिष्ठितत्वात् । तदेतच्च नायिकागतमेव ज्ञेयम्, उत्तमानुत्तमयोस्तारतम्याभावे नायकगतं च ।

धूमायिते द्विजवधूमदनार्तिवह्वावह्वाय कापि गतिरङ्कुरिता मयासीत् ॥

**अत्यन्ताभाव एवात्र रतेः खलु विवक्षितः ।**
**एतस्याः प्रागभावे तु शुचिर्नोपरसो भवेत् ॥ १० ॥**

*अनेकत्र रतिर्यथा—*

गान्धर्वि कुर्वाणमवेक्ष्य लीलामग्रे धरण्यां सखि कामपालम् ।
आकर्णयन्ती च मुकुन्दवेणुं भिन्नाद्य साध्वि स्मरतो द्विधासि ॥

**केचित्तु नायकस्यापि सर्वथा तुल्यरागतः ।**
**नायिकास्वप्यनेकासु वदन्त्युपरसं शुचिम् ॥ ११ ॥**

*विभाववैरूप्यम्—*

**वैदग्ध्यौज्ज्वल्यविरहो विभावस्य विरूपता ।**
**लतापशुपुलिन्दीषु वृद्धास्वपि स वर्तते ॥ १२ ॥**

*तत्र लता यथा—*

सखि मधु किरती निशम्य वंशीं मधुमथनेन कटाक्षिताथ मृद्वी ।
मुकुलपुलकिता लतावलीयं रतिमिह पल्लवितां हृदि व्यनक्ति ॥

*पशुर्यथा—*

पश्याद्भुतास्तुङ्गमुदः तुरङ्गीः पतङ्गकन्यापुलिनेऽद्य धन्याः ।

---

अत्यन्ताभावः त्रैकालिक्यसत्ता । अत्रेति । तासां ब्राह्मणदेहमधिकृत्येत्यर्थः ।

केचिद्रसतत्त्वविदः । अनेकासु तारतम्येन बहुविधासु । वैदग्ध्यादिविरह उपलक्षणम् । गुरुत्वादीनां यथा यज्ञपत्न्यादिषु च वैरूप्यं मतम् ।

लतापशुष्वत्र तत्सांनिध्यादिस्वभावेनानन्दमात्रमेव मधुररतितयोत्प्रेक्ष्यते, वृद्धासु हासमात्रार्थं तादृशत्वं च वर्ण्यते, तस्माद्वास्तववतद्रत्यभावाद्रसाभासत्वम् । पुलिन्दीषु तु वास्तवरतित्वेऽपि जातिवैरूप्याद्यज्ञपत्नीवत्तदाभासत्वं ज्ञेयम् । तत्र लतापशुषु वैदग्ध्यं नास्त्येव, वृद्धासु वैदग्ध्यप्रातिकूल्यं दृश्यते, पुलिन्दीषु च वैदग्ध्यं नातिसंभाव्यते, तस्मात्तद्विरह उद्दिष्टः । तथौज्ज्वल्यं नामाकृत्या जात्यादिना चायोग्यत्वं तत्तद्योग्यताविरहश्च यथायोग्यं द्रष्टव्यम् । स वर्तत इति । स वैदग्ध्यादिविरहो वर्तते ।

सखि मध्वित्यत्र । "समुकुलपुलका निशम्य वंशीं नखलिखिता च हरिं प्रसज्य जाता । तदिह नववयाः प्रतानिनीयं लसति तथा भवतो यथा वराङ्गि ॥" इति वा पाठः ।

पश्याद्भुता इत्यस्योत्तरार्द्धे—

या: केशवाङ्गे तदपाङ्गपूताः सानङ्गरङ्गां दृशमर्पयन्ति ॥

*पुलिन्दी यथा—*

कालिन्दीपुलिने पश्य पुलिन्दी पुलकाञ्चिता ।
हरेर्दृक्चापलं प्रेक्ष्य सहजं या विघूर्णते ॥

*वृद्धा यथा—*

कज्जलेन कतकेशकालिमा विल्वयुग्मरचितोन्नतस्तनी ।
पश्य गौरि किरती दृगञ्चलं स्मेरयत्यघहरं जरत्यसौ ॥

**स्थायिनोऽत्र विरूपत्वमेकरागतयापि चेत् ।**
**घटेतासौ विभावस्य विरूपत्वेऽप्युदाहृतिः ॥ १३ ॥**
**शुचित्वौज्ज्वल्यवैदग्ध्यात् सुवेषत्वाच्च कथ्यते ।**
**शृङ्गारस्य विभावत्वमन्यत्राभासता ततः ॥ १४ ॥**

*अथानुभाववैरूप्यम्—*

**समयानां व्यतिक्रान्तिर्ग्राम्यत्वं धृष्टतापि च ।**
**वैरूप्यमनुभावादेर्मनीषिभिरुदीरितम् ॥ १५ ॥**

*तत्र समयव्यतिक्रान्तिः—*

**समयाः खण्डितादीनां प्रिये रोषोदितादयः ।**
**पुंसः स्मितादयश्चात्र प्रियया ताडनादिषु ॥ १६ ॥**
**एतेषामन्यथाभावः समयानां व्यतिक्रमः ।**

*तत्राद्यं यथा—*

कान्तानखाङ्कितोऽप्यद्य परिहृत्य हरे ह्रियम् ।
कैलासवासिनीं दासीं कृपादृष्ट्या भजस्व माम् ॥

*अथ ग्राम्यत्वम्—*

**बालशब्दाद्युपन्यासो विरसोक्तिप्रपञ्चनम् ॥ १७ ॥**
**कटीकण्डूतिरित्याद्यं ग्राम्यत्वं कथितं बुधैः ।**

---

"याः केशवाङ्गं सखि सङ्गमय्य स्वैरादपाङ्गं भवतीर्जयन्ति ॥" इति वा पाठः ।

वैदग्ध्येत्यादिना दर्शितमेव विवृण्वन्नुपसंहरति—शुचित्वेति ।

शुचित्वादिकमालम्बनस्य ज्ञेयं विभावत्वं विशिष्टो भावः सत्ता स्थायी वा यत्र तद्रूपत्वम् । "पावित्र्यौज्ज्वल्यवैदग्ध्यसुवेषत्वैर्विभावगैः ।
शृङ्गारः पुष्टिमागच्छेदाभासत्वमतोऽन्यथा ॥" इति वा पाठान्तरम् ।

समयाः आचाराः ।

*तत्राद्यं यथा—*

किं नः फणिकिशोरीणां त्वं पुष्करसदां सदा।
मुरलीध्वनिना नीवीं गोपबाल विलुम्पसि॥

*अथ धृष्टता—*

**प्रकटप्रार्थनादिः स्यात्सम्भोगादेस्तु धृष्टता॥ १८॥**

*यथा—*

कान्तः कैलासकुञ्जोऽयं रम्याहं नवयौवना।
त्वं विदग्धोऽसि गोविन्द किं वा वाच्यमतः परम्॥

**एवमेव तु गौणानां हासादीनामपि स्वयम्।**
**विज्ञेयोपरसत्वस्य मनीषिभिरुदाहृतिः॥ १९॥**

*अथानुरसाः—*

**भक्तादिभिर्विभावाद्यैः कृष्णसम्बन्धवर्जितैः।**
**रसा हास्यादयः सप्त शान्तश्चानुरसा मताः॥ २०॥**

*तत्र हास्यानुरसः—*

ताण्डवं व्यधित हन्त कक्खटी मर्कटीं भ्रुकुटिभिस्तथोद्धुरम्।
येन बल्लवकदम्बकं बभौ हासडम्बरकरम्बिताननम्॥

*अथाद्भुतानुरसः—*

भाण्डीरकक्षे बहुधा वितण्डां वेदान्ततन्त्रे शुकमण्डलस्य।
आकर्णयन्निर्निमिषाक्षिपक्ष्मा रोमाञ्चिताङ्गश्च सुरर्षिरासीत्॥

**एवमेवात्र विज्ञेया वीरादेरप्युदाहृतिः।**

---

कैलासवासिनीनामिव पुराणान्तरकथितरीत्या फणिकिशोरीणामप्युदाहृतिमुपरस एवावज्ञया वर्णयति—किं न इति। पुष्करसदां कालियह्रदस्य जलवासिनीनाम्।

अत्र श्रीकृष्णस्य तदा बाल्येऽपि मुरलीध्वनिविशेषेण कृतकैशोरभानस्य बालेति सम्बोधनं तासामवैदग्ध्यमेव ज्ञेयम्।

भक्तादिभिरिति। भक्ता अत्र पञ्चविधाः। शान्तस्तु रसशास्त्रान्तरप्रसिद्धो रूढः।

कक्खटीनाम्नी।

भाण्डीरकक्षे तदूर्ध्वगलतासु। "सौरभे च तृणे मत्तः शुष्ककाननवीरुधोः।" इति विश्वः। "भाण्डीरवृक्षे" इति पाठस्तु सुगमः।

अष्टावमी तटस्थेषु प्राकट्यं यदि बिभ्रति ॥ २१ ॥
कृष्णादिभिर्विभावाद्यैस्तदाऽप्यनुरसा मताः ।

*अथापरसः—*

कृष्णतत्प्रतिपक्षाश्चेद्विषयाश्रयतां गताः ॥ २२ ॥
हासादीनां तदा तत्र प्राज्ञैरपरसा मताः ।

*तत्र हास्यापरसः—*

पलायमानमुद्वीक्ष्य चपलायतलोचनम् ।
कृष्णमाराज्जरासन्धः सोल्लुण्ठमहसीन्मुहुः ॥

एवमन्येऽपि विज्ञेयास्तेऽद्भुतापरसादयः ॥ २३ ॥
उत्तमास्तु रसाभासाः कैश्चिद्रसतयोदिताः ।

*तथा हि—*

भावाः सर्वे तदाभासा रसाभासाश्च केचन ॥ २४ ॥
अमी प्रोक्ता रसाभिज्ञैः सर्वेऽपि रसनाद्रसाः ।
भारत्याद्याश्चतस्रस्तु रसावस्थानसूचिकाः ॥ २५ ॥
वृत्तयो नाट्यमातृत्वादुक्ता नाटकलक्षणे ।

इति रसामृतसिन्धावुत्तरविभागे रसाभासलहरी नवमी ॥ ९ ॥

ग्रन्थस्य गौरवभयादस्या भक्तिरसश्रियः ।
समाहृतिः समासेन मया सेयं विनिर्मिता ॥ १ ॥

---

अष्टाविति । अत्र जरासन्धस्य हासस्तावदपरस एव, कस्यचित्तद्वदासुरभावस्यापि । तदनुगतो हासश्चेत्तदा शुद्ध एव हास्यरसः ।

एवमिति । अत्र सर्वप्रकरणार्थः समस्य विन्यस्यते—

विभावाद्या मिथो योग्याः सम्पद्यन्ते रसाय ते ।
वैरस्यायान्यथा, सा तु योग्यता लोकविश्रुता ॥

नाट्यमातृत्वाद् नाट्य एवोपयुक्तत्वादित्यर्थः ।

नाटकलक्षणे = नाटकचन्द्रिकाख्ये स्वकृत इति ज्ञेयम् ।

इत्युत्तरविभागे नवलहर्यात्मके रसाभासलहरी नवमी ।

इति दुर्गमसंगमनीनाम्न्यां हरिभक्तिरसामृतसिन्धुटीकायां चतुर्थो विभागः ।

गोपालरूपशोभां दधदपि रघुनाथभावविस्तारी ।
तुष्यतु सनातनोऽस्मिन्नुत्तरभागे रसामृताम्भोधेः ॥ २ ॥

इति भक्तिरसामृतसिन्धौ गौणभक्तिरसादिनिरूपणनामा चतुर्थो विभागः ।

रामाङ्गशक्र १४६३ गणिते शाके गोकुलमधिष्ठितेनायम् ॥
भक्तिरसामृतसिन्धुर्विटङ्कितः क्षुद्ररूपेण ॥ १ ॥

※ इति श्रीहरिभक्तिरसामृतसिन्धुः ※

॥ समाप्तः ॥

---

रामाङ्गेति । शालिवाहनस्य संवत्सरगणनया विक्रमादित्यस्यापि सा ज्ञेया, अङ्कस्य वामा गतिरिति प्रसिद्धया त्रिषष्ट्यधिकचतुर्दशशतीगणित इत्यर्थः, विक्रमादित्यस्य त्वष्टनवत्यधिकपञ्चदशशतीगणित इति ज्ञेयम् ।

विटङ्कितः उट्टङ्कितः, सुष्ठु रूपेणेत्येव पठितव्यं तेषां दीनंमन्यतामयपाठेऽपि तदसहिष्णुः सरस्वती क्षुद्रं सूक्ष्मं दुर्ज्ञेयं रूपं स्वरूपं यस्येति गत्यन्तरास्पदं पदं स्फोरयन्ती समाहितवती ।

श्रीकृष्णः सर्वपूर्णः स चरति विपुले गोकुले व्यक्ततत्त-
न्माधुर्यैश्वर्यवर्यः स च पशुपसुतानन्तलक्ष्मीभिरिष्टः ।
श्रीराधावर्गमध्ये स च मधुरगुणश्रीधुराधामधारी-
त्यस्मिन् ग्रन्थे रसाब्धावभिमतमहिमाधारसारप्रचारः ॥

यदपि च नातिविशुद्धा तदपि च सद्भिः कदाप्युरीकार्या ।
दुर्गमसङ्गमनीयं नौकेवास्यामृताम्भोधेः ॥

समाप्ता चेयं टीका तेषामेव प्रीतये भवतु ।

[ मूलं ३३२५ टीका ३६४४ समस्त ग्रन्थः ६९६९ । ]

# भक्तिरसामृतसिन्धौ

## उदाहृतश्लोकानामकाराद्यनुक्रमणी


| श्लोक | पृष्ठ |
|---|---|
| अकस्मादेकस्मिन् पथि | २८० |
| अक्लेशां कमलभुवः प्रविश्य | २०८ |
| अखण्डनिर्वाणरसप्रवाहै० | १३० |
| अखण्डितविखण्डितैः | १२९ |
| अग्निपुत्रा महात्मानः | ६३ |
| अग्रासि यन्निरभिसन्धि० | १८८ |
| अग्रे लीलालकलतिकया | २४७ |
| अग्रे सानुग्रहं पश्यन् | २३३ |
| अघमर्दनस्य सखि नूपुर० | १३१ |
| अघस्य जठरानलात्फणि० | २५३ |
| अघहर कुरु युग्मीभूय नृत्यं | ९१ |
| अघहर जितकाशी | २५० |
| अघहर तव वीर्यप्रोषिता० | १७० |
| अङ्गस्तम्भारम्भमुत्तुङ्ग० | २२० |
| अचिन्त्याः खलु ये भावा | १९६ |
| अचिरमघहरेण त्यागतः | १७२ |
| अचिरादेव सर्वार्थः | ३१ |
| अटति यद्भवानह्नि काननं | १०९ |
| अणिमादिसौख्यवीची० | २२३ |
| अतः क्षमस्वाच्युत मे | १५० |
| अतिप्रयत्नेन रतान्त० | १५१ |
| अत्यासारातिवातेन | १५६ |
| अत्रासीत्किल नन्दसद्म | ७१ |
| अथ कंससहोदरोग्रदावे | १९३ |
| अथ ब्रह्मादिदेवानां | १२० |
| अथापि ह्युत्तमश्लोके | ११९ |
| अदूरमासेदुषि बल्लवा० | १५४ |
| अदृष्टपूर्वमालोक्य | ६८ |
| अद्भुता बहवः सन्तु | १३२ |
| अद्य स्विद्यति वेपते | १४५ |
| अद्वैतवीथीपथिकै० | २११ |
| अधिरोहतु कः पक्षी | १७८ |
| अनङ्गनयचातुरीपरि० | १२४ |
| अनन्यममता विष्णौ | ७४ |
| अनाश्रितपरिच्छदाः | २५४ |
| अनुगतिमतिपूर्वां चिन्तयन् | ९१ |
| अनुल्लासश्वासा मुहु० | १६० |
| अन्तःक्लेशकलङ्किताः | ३०० |
| अन्तःशुद्धिर्बहिःशुद्धि० | ५६ |
| अन्तर्हिते त्वयि बलानुज० | १७२ |
| अन्त्यजा अपि तद्राष्ट्रे | २७ |
| अन्याय्यं न हराविति | ११७ |
| अन्याश्च तदनुध्यान० | १४३ |
| अन्ये तदनुरूपाणि | २५३ |
| अन्येषु पुण्यतीर्थेषु | ५१ |
| अपराजितमानिन्हठा० | २८९ |
| अपरिकलितपूर्वः कश्चम० | ११० |
| अपसरापसर त्वरया | १५६ |
| अपि गहनागसि नागे | २१५ |
| अपि गुरुपुरस्त्वं दोस्तम्भौ | २५१ |
| अपि जनिपरिहीनः सूनु० | १०७ |
| अपि मुरान्तकपार्षद० | २३२ |
| अप्यद्य विष्णोर्मनुजत्व० | २२५ |
| अप्रारब्धफलं पापं | ९ |

अभिद्रवति मामीश १५०
अभिवाद्य गुरोः पादाम्बुजं० ९७
अभूत् कंसरिपोर्नेत्रं ९२
अमररिपुवधूटीभ्रूण० १३१
अमून्यधन्यानि दिनान्त० २२५
अम्बरमणिनिकुरम्बं ८६
अम्भोभारभरप्रणम्र० ११३
अयं कम्बुग्रीवः कमल० ८०
अयमुपहितकर्णः प्रस्तुते २३२
अयि पङ्कजनेत्रमौलिमाले १३२
अयोग्यमात्मानमितीश० २२८
अरतिभिरतिक्रम्य क्षामा १६६
अरुणाम्बरमुच्चलेक्षणं २४४
अरुणिमयुगपाङ्गतुङ्ग० २६३
अरे युवतितस्कर प्रकटमेव ३००
अलङ्कारमलं कृत्वा २४९
अलब्धे वा विनष्टे वा ३३
अवन्तिपुरवासिनः ८९
अवलम्ब्य कराङ्गलिं २६०
अवलोक एव नृपतेः ९७
अवलोक्य फणीन्द्रयन्त्रितं १९३
अशोषयन् मनस्तस्य २२२
अश्नीमहि वयं भिक्षा० १६७
अश्लिष्टकोमलपदा० ८८
अश्वत्थस्तुलसीधात्री ३२
अष्टादशमहादोषै ११४
अष्टानां दनुजभिदङ्ग० ८६
असंगमान्माधवमाधुरीणा० १४८
असत्यं क्रोध आकाङ्क्षा ११४
असि शशिमुकुटाद्यै० २२६
असौ पाणिस्पर्शो मधुर० १७२
असौ किं तापिच्छो १६५
अस्त्रेण दुष्परिहरा २५३
अस्थूलश्चानणुश्चैव ११४
अस्मान् दुनोतु कमलं २२८
अस्मिन् मथुरावीथ्या० १८५
अस्मिन् सुखघनमूर्तौ २०९
अस्य प्रेक्ष्य करं शिशो० २८४
असृङ् मूत्राकीर्णे घन० ३०८
अहमिह कफशुक्रशोणि० ३१२
अहह कमलगन्धैरत्र २६९
अहह नवाम्बुदकान्ते० १२७
अहैतुक्यव्यवहिता ८
अहो क्षेत्रस्य माहात्म्यं ३२
अहो धन्योऽसि देवर्षे ६८
अहो पश्यत नारीणाम १३४
अहो भाग्यमहो भाग्यं १२०
अहो मधुपुरी धन्या ५१
अहो महात्मन् बहुदोष० २१५

( आ )

आः पापिन् यवनेन्द्रदर्दुर ११३
आकर्णयन्नघहरामघ० १४४
आकर्ण्य कर्णपदवीविपदं १५४
आकलय्य परिवर्तितगोत्रां १६१
आक्रुष्टे प्रकटं दिदण्डयिषुणा ११७
आघूर्णन्मणिवलयोज्ज्वल० १५१
आघ्राणं गन्धपुष्पादे० ४०
आघ्राणं यद्धरेर्दत्त० ४०
आचार्यं मां विजानीयात् ३१
आज्ञायैवं गुणान् दोषान् २८
आत्मारामानपि गमयति २१६
आत्मारामाश्च मुनयो २४
आर्द्राङ्गस्खलदच्छधातुषु २५३
आननामसितभ्रुवोरुपचिता० ७०
आम्नायप्रथितान्वया ८९
आराधन भगवत २१
आराधनानां सर्वेषां ४७
आलिङ्गनं वरं मन्ये ३२
आशीस्तथ्या जय जय १०१
आसीच्छायाद्वितीयः १०६

( इ )

इति स्म पृष्टः स च बाद० १५९

इतोऽदूरे राज्ञी स्फुरति २७९
इत्थं मनोरथं बाला ६७
इत्थं शरत्प्रावृषिकावृतू ६७
इत्थं सतां ब्रह्मसखानु० २४०
इदं हि पुंसस्तपसः श्रुतस्य ३८
इमे चान्ये च भगवन् ८२
इयं ते हासश्रीविरमतु १७२

( ई )

ईश्वरे तदधीनेषु ११९
ईहा यस्य हरेर्दास्ये ४३

( उ )

उत्तिष्ठ मूढे कुरु मा ३०१
उदस्रं देवर्षिर्दिवि २८६
उद्दामभावपिशुनामल० ९३
उन्निद्रस्य ययुस्तवात्र २३९
उन्मदोऽपि हरिर्नव्य० ९४
उन्मील्य व्रजशिशवो २८८
उपरिकनकदण्डं मण्डनो २१७
उपस्थिते चित्रपटाम्बु० १३४
उररीकृतकाकुराकुला १३४
उष्णीषे दरवक्रिमा २४८

( ऋ )

ऋणमेतत्प्रवृद्धं मे ९१

( ए )

एक एव भवेत्स्थायी ३१५
एकमेव विविधोद्यम० २८७
एकान्तिनो यस्य न २२
एकोऽपि कृष्णाय कृतः ३६
एतदीशनमीशस्य १०३
एतन्निर्विद्यमानानाम् ५०
एते नह्यद्भुता व्याध ५६
एते हि यादवाः सर्वे १२०
एवं क्रियायोगपथैः १६
एवंव्रतः स्वप्रियनाम० ७५

( ऐ )

ऐश्वर्ययोगाद्भगवान् ११४

( क )

कंसशत्रुमभियुञ्जतः पुरो १४१
कंसारिरपि संसार० २७८
कंसारेर्विरहज्वरोर्मि० २५५
कः पर्येत्यम्बिकेयं हरि० २१४
कश्चिद्बुधः स्वस्त्ययन० १३३
कज्जलेन कृतकेशकालिमा ३२५
कण्ठसीमनि हरेर्द्युति० १९३
कथं वयं नाथ चिरो० २३१
कथमनायि पुरे मयका १४९
कथमपि परिरब्धुं न २६४
कदा गंभीरया वाचा ३९
कदाचित्खेदाग्निं विघट० १५९
कदा शैलद्रोण्यां पृथु० २०७
कदाऽहं यमुनातीरे ३९
कनकनिवहशोभानिन्दि १२८
कन्दर्प विन्दन्ति मुकुन्द० २३४
कपटं च हठश्च नाच्युते ९३
कमपि पृथगनुच्चै० २१९
कम्प्रा स्वेदिनि चूर्ण० ३१३
करयोः कमलं तथा रथाङ्ग ८५
कर्णाकर्णि सखीजनेन १२६
कर्तुं मुग्धाः स्वयमच० १२४
कर्तुमिच्छति मुरद्विषे १३८
कलयत हरिरध्वना १३२
कलिन्दनन्दनीकूल० २२३
काञ्ची चित्रा मुकुटमतुलं १३०
कान्तः कैलासकुञ्जोऽयं ३२६
कान्तानखाङ्कितोऽप्यद्य ३२५
कान्ताभिः कलहायते क्वचि० १२६
कामं तामरसाक्ष केलि० १७१
कामं वपुः पुलकितं नयने २७८
कामादीनां कति च कतिधा० २१५
कामाद् द्वेषाद्भयात्स्नेहात् ५७
कालिन्दीतटभुवि पत्र० १९२
कालिन्दीपुलिने पश्य ३२५

| | |
|---|---|
| कालिन्दीमधुरत्विषं | २१७ |
| का वृषस्यति तं गोष्ठ० | १६३ |
| का स्त्र्यङ्ग ते कलपदा० | ११० |
| किं ते कृतं क्षिति तपो | १३९ |
| किं नः फणिकिशोरीणां | ३२६ |
| किं शुष्यद्वदनोऽसि | ३०५ |
| किमत्र सूर्यातपमाक्षि० | १३९ |
| किमिदं किमिदं किमेत० | १५५ |
| किमिव कुरुते हर्म्ये | २६८ |
| किमुन्मीलत्यस्रे कुसुम० | १४५ |
| कुञ्चयन्नक्षिणी किंचि० | २३६ |
| कुटुम्बिनि मनस्तटे विधु० | २६९ |
| कुतुकादभिमन्युवेषिणं | १३९ |
| कुन्दैर्मुकुन्दाय मुदा सृजन्ती | १३६ |
| कुबेरात्मजौ बद्धमूर्त्यैव | २३ |
| कुमारस्ते मल्लीकुसुम० | ३२० |
| कुरुजाङ्गले हरिमवेक्ष्य | २५६ |
| कुलवरतनुधर्मग्राव० | १०४ |
| कुवलययुवतीनां लेह० | २७९ |
| कुसुमान्यवचिन्वतः सम० | २५३ |
| कृत व्यालीकेऽपि न कुण्ड० | ८८ |
| कृताः कृतार्था मुनयो | १०० |
| कृतागसं पुत्रमनुव्रजन्ती | १५१ |
| कृतानु यात्रा विद्याभिः | १० |
| कृष्णं महाबकग्रस्तं | १६० |
| कृष्णं मुष्णन्नकरुण | ३०२ |
| कृष्णः प्रसादमकरो० | १०३ |
| कृष्णनामाक्षरैर्गात्र० | ३५ |
| कृष्णनामानि मुदोपवीणिते | १३४ |
| कृष्णप्रियाणामाकर्षे | २९८ |
| कृष्णस्य पश्यत कृपां | २२० |
| कृष्णस्य मण्डनततिर्मणि० | १२७ |
| कृष्णाधिक्षेपजातेन | १४१ |
| कृष्णापांगतरंगितद्यु० | २७८ |
| कृष्णाय नम इत्येष | ३८ |
| कृष्णेति मङ्गलं नाम | ३८ |
| कृष्णोत्तीर्णं तु निर्माल्यं | ३५ |
| केचिद्भीताः शरणम० | २१४ |
| केशवस्य करुणालवोऽपि | २२४ |
| कोटयो ब्रह्महत्याना० | ४० |
| को न्वीश ते पादसरोज० | २० |
| क्रीडोत्सवानन्दरसं | २५१ |
| क्रोशन्त्यां करपल्लवेन | ३०३ |
| क्लेशे क्रमात्पञ्चविधे | १०५ |
| क्वचित्प्रभुरिति स्तुवन् | १८६ |
| क्वचिद्रुदन्त्यच्युत० | २३२ |
| क्वचिन्नटति निष्पटं | २२७ |
| क्वणितकनककिङ्किणी० | २६२ |
| क्व मे पुत्रो नीपाः कथ० | २६९ |
| क्व यामि जरती खला | २८५ |
| क्व स्तन्यगन्धिवदनेन्दु० | २८७ |
| क्वाहं तमोमहदहंखच० | १०७ |
| क्षणमपि पितृकोटि० | ३१६ |
| क्षणादक्षौहिणीवृन्दे | ९६ |
| क्षितिरतिविपुला टलत्य० | १५६ |
| क्षेत्रे कुरोः किमपि सूर्य० | २१० |
| क्षौमं वासः पृथुकटितटे | २५९ |


( ग )


| | |
|---|---|
| गण्डान्तस्फुरदेककुण्डल० | २४१ |
| गते वृन्दारण्यात् प्रिय० | २५४ |
| गभीरोऽप्यश्रान्तं दुर० | १८३ |
| गरिष्ठारिष्टटङ्कारै० | १७६ |
| गवां गोपालानामपि शिशु० | १९२ |
| गाण्डीवपाणिः करिराज० | २३९ |
| गान्धर्वि कुर्वाणमवेक्ष्य | ३२४ |
| गायन्त्य उच्चैरमुमेव | १५८ |
| गावश्च कृष्णमुखनिर्गत० | १६१ |
| गिरिवरभृति भर्तृदार० | २१८ |
| गिरसन्निभमल्लचक्र० | १३८ |
| गिरेरुद्धरणं कृष्ण दुष्करं | ९२ |
| गीतं गुम्फति ताण्डवं | ९० |
| गीत्वा तु मम नामानि | ५० |

गुणात्मनस्तेऽपि गुणान् ११०
गुणाविरुद्धा अपि तु ११४
गुणैरलमसंख्येयैः ६८
गुम्फन्तु गोपाः कुसुमैः १५३
गुरुजनगञ्जनमयशो २७८
गुरुपुत्रमिहानीतं १०६
गुरुमपि गुरुवासक्लेश० ९३
गुरुरपि भुजगाङ्घ्रीस्तक्षकात् २२४
गूढा गाम्भीर्यसम्पद्भिः १६३
गूढोऽपि वेषेण महीसुरस्य ८८
गृहिणि गहनयान्तर्श्चि० १६६
गोकुलेन्द्रगुणगानरसेन २२१
गोपोऽप्यशिक्षितरणोऽपि १७७
गोप्यः कामाद्भयात्कंसो ५८
गोविन्दं गृहमानीय १६१
गोविन्दः प्रियसुहृदां ३०१
गोविन्दप्रेक्षणाक्षेपि० १४२
गोविन्दे सुबलमुखैः समं १६३
गोविन्दे स्वयमकरोः १६२
गोष्ठं रमाकेलिगृहं १६७

( घ )

घनरुधिरमये त्वचा ३०७
घोरा खण्डितशङ्खचूड० २८०
घ्राणोद्घूर्णकपूतिगन्ध० ३०८

( च )

चंचत्कौस्तुभकौमुदी० २१३
चंचत्कौस्तुभकौमुदी० २३८
चंडांशोस्तुरगान् सटा० १५६
चकार मेघे तद्वर्णे २२५
चतुर्वारं भ्रमीभिस्तु ३६
चार्चिक्यं वैजयन्तीं २९३
चित्रं मुरारे सुरवैरि० १०८
चिन्तां कुर्यान्न रक्षायै ४५
चिन्तामणिश्चरणभूषण० १०२
चिरं जीवेति संयुज्य ३१७
चिरमिह वृजिनार्त० १५०
चिरमुत्कण्ठितमनसो १८९
चिरयति मणिमन्वेष्टुं २२९

( छ )

छाया न यस्य सकृद० १७८

( ज )

जगज्जनन्यां जगदीश २१९
जनितिथिरिति पुत्रप्रेम० २४१
जरां याता मूर्तिमम १४९
जितचन्द्रपरागचन्द्रिका २६५
जीवस्फुलिङ्गवह्नेर्महसो ३११
ज्ञानं विरक्तिरैश्वर्यं ८२
ज्ञानतः सुलभा मुक्तिः १२
ज्वर परिहर वित्रासं ९८
ज्वलति दुर्मुखि मर्माणि ३०३

( ड )

डिम्भस्य जृम्भां भजत० १३९
डिम्भाः स्वर्णनिभाम्बरा २८८
डुण्डुभो जलचरः स १७७
डोरीजूटितवक्रकेश० २५९

( त )

तं नागभोगपरिवीतमदृष्ट० २९७
तं निर्व्याजं भज गुणनिधिं ९२
तं मातुलेयं परिरभ्य २५६
तं मोपयातं प्रतियन्तु ६९
तटभुवि कृतकान्तिः ५२
तडिद्विलासतरला ३१७
ततोऽति कुतकोद्वृत्त० १३८
तत्तोऽनुकम्पां सुसमीक्ष० ४१
तत्त्वब्रह्माण्डमाढ्यं १०७
तत्र भागवतान् धर्मान् ३०
तत्रान्वहं कृष्णकथाः ६६
तत्रैकांसगतं बाहुं १६७
तथा गाण्डीवधन्वानं २९०

तथा न ते माधव तावकाः १५३
तथा परमहंसानां २४
तथाहमपि तच्चित्तो २८०
तदवधि मलिनोऽसि १५४
तदात्वाभिव्यक्तीकृत० ८७
तदीक्षणोत्प्रेमरसाप्लुता० २६४
तदेव गन्धर्वगणा न राक्षसा ९१
तद्दर्शनाह्लादविवृद्ध० १३२
तनुरुचिविजितहिरण्यं २४४
तनूरुहाली च तनुश्च १७५
तनोति मुखविक्रियां ३१२
तनौ मन्त्रन्यासं प्रणयति २६०
तन्मातरो वेणुरवत्वरो० २६४
तमात्मजैर्दृष्टिभिरन्तरात्मना १६३
तरक्षुनखमण्डनं नवतमाल० २६१
तव चिरविरहेण प्राप्य १५९
तवास्मीति वदन् वाचा ४६
तस्मात्केनाप्युपायेन १५
तस्माद्गुरुं प्रपद्येत ३०
तस्माद् भारत ! सर्वात्मा १६
तस्मान्मद्भक्तियुक्तस्य ५४
तस्मिन् महान्मुखरिता ४१
तस्मिन्समर्पितं कर्म ४३
तस्य प्रस्फुरितौष्ठस्य १४७
तस्या अमूनि नः क्षोभं १६९
तस्याः कान्तद्युतिनि वदने ३१९
तस्याः सुस्राव नेत्राभ्यां १४२
तस्यारविन्दनयनस्य २०८
तांडवं व्यधित हन्त ३२६
ताः पुत्रमङ्कमारोप्य २६१
ताम्बूलस्फुरदाननेन्दु० १२९
तारावली वेणुभुजङ्गमेन १३१
तावत्कर्माणि कुर्वीत ५३
तासां रतिविहारेण १५२
तिलकुसुमविहासिना० २४७
तिलतण्डुलितैः कचैः २६०
तिष्ठते वैष्णवं शास्त्रं ४६
तुन्दं विन्दति ते मुकुन्द २४६
तुलयाम लवेनापि ५०
तुलसीदलमात्रेण ९९
तुषारति तुषानलोऽप्यु० २६७
तुष्टे च तत्र किमलभ्य० २१
तेन सम्यक् प्रपन्नानां ४८
ते नाधीतश्रुतिगणा ७५
ते पक्ष्मपाब्दवालाभा० २०७
ते सर्वे स्त्रीत्वमापन्नाः ६३
तैर्दर्शनीयावयवैरुदार० २०
तैस्तान्यघानि पूयन्ते १०
तौ दृष्ट्वा विकसद्वक्त्र० १६७
त्यक्त्वा स्वधर्मं चरणाम्बुजं २८
त्रय्या चोपनिषद्भिश्च २५८
त्रिचतुरदशनस्फुरन् २६०
त्रिभुवनविभवहेतवे० ४४
त्रिवर्गदा कामिनां या ५१
त्रिवर्षा बालिका सेयं १८५
त्रैलोक्यवर्तितीर्थानां ४७
त्वं कलासु विमुखोऽपि २२१
त्वं काऽसि शान्ता किमि० ३१९
त्वं चुम्बकोऽसि माधव १०२
त्वं नः प्रोज्झ्य कठोर २४३
त्वं न्यस्तदण्डमुनिभिः १६६
त्वक्श्मश्रुरोमनखकेश० ३१९
त्वच्छैशवं त्रिभुवना० २२६
त्वत्कथामृतपाथोधौ १३
त्वत्साक्षात्करणाह्लाद० १३
त्वद्यशःकुमुदबन्धुकौमुदी १००
त्वमवागिह मा शिरः १६२
त्वयि प्राप्ते कंसक्षिति० २५४
त्वयि रहसि मिलन्त्यां १७८
त्वयोपभुक्तस्रग्गन्ध० ३५
त्वय्यर्पितं वितर वेणुमिति १४०
त्वां प्रपन्नोऽस्मि शरणं ४६

(द)

दधामि दधिफाणितं २८४
दधति तव तथाद्य सेव० २२९
दनुजदमन याते जीवने २३०
दम्भेन वाष्पाम्बुझरस्य २२३
दरोदञ्चद् गोपीस्तनपरि० ९८
दशभिः सिद्धसखीभिः १०६
दशार्धशरमाधुरीदमन० १२५
दामोदरस्य बन्धनकर्म० १७०
दावं समीक्ष्य विचरन्त० २५१
दिवि वा भुवि वा ममास्तु १८७
दीयमानं न गृह्णन्ति ८
दीव्यतीह मधुरे मथुरायां २५५
दुग्धेन दिग्धा कुचविच्यु० २६४
दुरवगमात्मतत्त्वनिगमाय २२
दुर्मानमन्थमथिते ३०१
दुर्वारचापलो यं धाव० १७९
दुस्त्यजश्चानुरागोऽस्मिन् १२१
दूती चागात्तदागारं १७३
दूरतस्तमवलोक्य ८६
दूराद्विद्रावयन्निद्रा० १७३
दूरे दरेन्द्रस्य नभस्यु० २३४
दृगम्भोभिर्धौतः पुलक० ५२
दृशोस्तरलितैरलं व्रज ३१३
दृष्टा स्पृष्टा तथा ध्याता ४६
देवः सेव्यतया यथा २१८
देवक्या विवृतप्रसू० २६५
देवर्षिवीणया गीते १८६
देवर्षिभूताप्तनृणां २८
दैत्याचार्यास्तदाऽऽस्ये ३२१
दोर्भ्यामर्गलदीर्घाभ्यां ३१७
द्रुतं कुरु परिष्कृतं २१८
द्विषद्भिः क्षोदिष्ठैर्जगदवि० २३५

(ध)

धनुर्वेदमधीयानो मध्य० २५३
धन्यः साम्ब भवान् सरि० २३४
धन्यानां किल मूर्द्धन्याः ३१२
धन्याः स्फुरन्ति तत्र सूर्ये २२२
धर्मार्थकाममोक्षेषु २३
धिगस्तु हतजीवितं २६८
धिगस्तु मे भुजद्वन्द्वं १७५
धिग्जन्म नस्त्रिवृद्यत्तद् १७६
धिग्दीर्घे नयने ममास्तु १८०
धीर्व्यग्राजनि नः समस्त ६५५
धुन्वन् धावसि मण्डला० २४०
धूर्तस्त्वं यदवैषि हृद्गत० २४८
धृताटोपे गोपेश्वरजलधि० २९१
ध्यानं बलात्परमहंस० १३०
ध्यानातीतं किमपि परमं २१५
ध्यायं ध्यायं भगवतः ६६
ध्रुपमघरिपुरादधाति १३५

(न)

न काचिदभवद्गुरोर्भजन० १२०
न कामये नाथ तदप्यहं २१
न किंचित्साधवो धीरा २२
न गुञ्जामादातुं प्रभवति १४४
न जानीषे मूर्ध्नश्च्युत० १६५
नदति क्वचिदुत्कण्ठो २२७
न दानं न हविर्येषां ३९
न धर्मकाममर्थं वा २३
न नाक पृष्ठं न च सार्व० २२
न नाक पृष्ठं न महेन्द्र० २१
नन्दः स्वपुत्रमादाय २६५
न पतिं कामयेत् कंचित् ७५
न पारमेष्ठ्यं न महेन्द्र० २२
न पुत्रि रचयौषधं विसृज १३५
न प्रेमा श्रवणादिभक्ति० ७०
नयनयोः स्तनयोरपि २६९
नर्मकार्मणतया सखीगणे १६८
नर्मोक्तौ मम निर्मितो० २७७

नवं धनुरिवातनोर्नट० १२३
नवकुवलयदामश्यामलं २५७
नवधा तुलसीं देवीं ४६
नवनववरमाधुरी० २७७
नवानुरागेण तवावशाङ्गी १३३
नवाम्बुधरबन्धुरः कर० २१२
नव्ये ब्रह्माण्डवृन्दे सृजति १०३
न शक्तिमुपवीणने १४५
न शिष्याननुबध्नीत ३२
न साधयति मां योगो १३
न हानिं न ग्लानिं न ९९
नात्यन्तिकं विगणय० २९४
नामचिन्तामणिः कृष्ण० ५०
नामाश्रयः कदाचित्स्या० ३३
नारदस्य प्रसादेन ६८
नारायणपरा सर्वे २१
नासां द्विजाति संस्कारो ११९
नासिकाग्रहगयं पुरो २०८
निगमकल्पतरोर्गलितं ४८
निचुलितगिरि धातु० २६४
निन्दां भगवतः श्रृण्वन् ३४
निन्दितस्य दमघोष ९५
निबद्धमूर्द्धाञ्जलिरेष २२६
निभृतमरुन्मनोक्षदृढः ५९
निमेषोन्मुक्ताक्षः कथ० २२७
निरविद्यतया सपद्यहं ३१२
निरातपत्रः कान्तारे ३१३
निरुच्छ्वसितरीतयो १५९
निरुद्धं बाष्पाम्भः कथमपि १४४
निरुद्धा कालिन्दीतटभुवि १७९
निरुध्य पुरमुन्मदे हरि० ३०३
निर्धौतानामखिलधरणी० १६९
निर्वेदमाप न वनभ्रमणे ९३
निशमयतो हरिचरितम् १४७
निशम्य कर्माणि गुणा० २३२
निशम्य पुत्रं त्रुटतोस्तटान्ते १५५
निष्क्रमय्य किल कालि० २५२
निष्कामन्तं नागमुन्मथ्य २५१
नृत्यतां श्रीपतेरग्रे ३५
नृत्यद् गोपनितम्बिनी० १२७
नेत्राम्बुजद्वन्द्वमवेक्ष्य २५४
नैकात्मतां मे स्पृहयन्ति २०
नैवेच्छत्याशिषः क्वापि २३
नैवेद्यमन्नं तुलसी० ३९
न्यस्तक्रीडनको बालो २२७
न्याय्यो हि दण्डः कृत० ९५

( प )

पतिपुत्रसुहृद्भ्रातृ ६४
पतिसुतान्वयभ्रातृबान्ध० १६४
पत्नीं रत्ननिधेः परामुप० २२३
पथि पथि सुरभीणामंशुको० २६३
पदा सुजातेन नखारुण० १४२
परमात्मतयातिमेदुरात् २१०
परमानन्दसंदोहा ११४
परमानुरागपरया८थ० २८१
पराभवं फेनिल वक्त्रतां १०८
परिचर्यापराः केचित् ४४
परिनिष्ठितोऽपि नैर्गुण्य ४९
परिमलसरिदेषा यद्व० १३०
परिवदतु जनो यथा १३४
परिस्फुरतु सुन्दरं चरित० १०९
परिहितहरिहारा वीक्ष्य १७९
पर्यङ्के महति सुरारिह० २३९
पलायमानमुद्वीक्ष्य ३२७
पशूनपि कृताञ्जलिर्नमति १५७
पश्य विन्ध्यगिरितोऽपि ८६
पश्याद्भुतास्तुङ्गमुदः ३२४
पश्येश मेऽन्नार्यमनन्त १५०
पश्योत्सिक्तवलित्रयी० २४८
पांशुप्रारब्धकेतौ बृह० १५६
पाञ्चजन्यजनितां ध्वनि० २०९

| | | | |
|---|---|---|---|
| पाञ्चालीपतयः श्रुत्वा | २४९ | प्रभवति विबुधानामग्रिम० | १६८ |
| पाटलपटलसदङ्गो | २४ | प्रभावति समीक्ष्यतां | २३३ |
| पाण्डवः पुण्डरीकाक्षं | २५६ | प्रभुरयमखिलैर्गुणैर्गरी० | २१४ |
| पाण्डित्यं रतहिण्डका० | ३०७ | प्रभुरयमनिशं पिशङ्गवासाः | २१३ |
| पादैश्चतुर्भिर्भवता वृषस्य | ९६ | प्रयाणे चाप्रयाणे च | ४१ |
| पादौ हरेः क्षेत्रपदानु० | ५७ | प्रयास्यति महत्तपः सफ० | २१० |
| पारावतीविरचनेन | ९० | प्रलम्बरिपुरीश्वरो भवतु | २१९ |
| पारीर्भिनत्ति विकिरत्य० | २६३ | प्रवाच्यमाने पुरतः पुराणे | १४७ |
| पिण्डीशूर त्वमिह सुबलं | २९० | प्रविशन्नालयं विष्णो० | ३६ |
| पितेव पुत्रं करुणो | ३३ | प्रविष्टवति माधवे भुजग० | २५१ |
| पिशिताम्रमयी नाहं | ३१७ | प्रविष्टे नासिकारन्ध्रे | ४० |
| पीतांशुकं परिचिनोमि | १७७ | प्रागल्भ्यं प्रश्रयः शीलं | ८२ |
| पीयूषद्युतिभिः स्तनाद्रि० | २६७ | प्राप्तं निशम्य नरलोचन० | १६८ |
| पुत्रस्ते नवनीतपिण्डम० | ३१३ | प्रीत्योत्फुल्लमुखाः प्रोचुः | २२३ |
| पुनः पुनर्वरान् दित्सु० | २३ | प्रेक्ष्य तत्र मुनिराजम० | २६५ |
| पुनस्तेनैव गच्छन्ति | १२१ | प्रेक्ष्य पिच्छकुलमक्षि | २२९ |
| पुरस्तादाभीरीगणभय० | २३१ | प्रेक्ष्य प्रेक्ष्य दिशः सशङ्क० | २६३ |
| पुरा महर्षयः सर्वे | ६२ | प्रेक्ष्य वृन्दावनात् पुत्र० | १५५ |
| पुरुषोत्तम चेदवातरि० | १०१ | प्रेमैव गोपरामाणां | ६० |
| पूजितं पूज्यमानं वा | ४० | प्रेम्णस्तु प्रथमावस्था | ६५ |
| पूतनामिह निशाम्य | १३७ | प्रेष्ठं प्रियेतरमिव प्रति० | १४० |
| पृथु समरसरो विगाह्य | ९६ | प्रोत्साहयस्यतितरां | २९० |
| पृथे तनयपञ्चकं प्रकट० | ८७ | प्रोषिते बत निजाधि० | २२९ |
| प्रकटितनिजवासं स्निग्ध० | १६८ | (फ) | |
| प्रणिधानविधिमिदानीम० | १६४ | फणिह्रदमवगाढे दारुणं | २९७ |
| प्रतिकूलेऽपि सशूले शिवे | ११७ | फेनायते प्रतिपदं क्षिपते | १५८ |
| प्रतिज्ञा तव गोविन्द | ४४ | (ब) | |
| प्रतिवाचमदत्त केशवः | ९३ | | |
| प्रतिवादिचित्तपरिवृत्ति० | ८८ | बकसोदरदानवोदरे | १३८ |
| प्रतीयमानाः प्रथमं | १९५ | बलस्य बलिनो बला० | २९१ |
| प्रत्यानीताः परम भवता | २१ | बलानुजसदृग्वयोगुण० | २३९ |
| प्रत्याहृत्य मुनिः क्षणं | ३१८ | बलिसुतभुजषण्डखण्डनाय | २२८ |
| प्रथमदर्शनरूढसुखावली० | १७२ | बिभ्रद् गेण्डुं पाण्डुरोद्भास० | २४२ |
| प्रथयति न तथा ममार्तिमुच्चैः | १५४ | बर्हापीडं नटवरवपुः | १२३ |
| प्रथयन् वपुर्विवशतां | ३२३ | बिभ्रद् वेणुं जठरपटयोः | २४५ |
| प्रपन्नो भाण्डीरेऽधिक० | २५४ | बिले क नु विलिल्यिरे | १५२ |

ब्रह्मज्ञाया निष्फलं मे ३१६
ब्रह्मन्नत्र पुरद्विषा सह १०२
ब्रह्मरात्रिततिरप्यघशत्रो १०९
ब्राह्मणो वासुदेवाख्यं ३७

( भ )

भगवच्चरणद्वन्द्वध्यानं ४२
भगवति च हरावनन्यचेता ७४
भगवानपि गोविन्दः २८१
भभ्रमति मेदिनी लल० १५२
भवतः प्रतापतपने १००
भवतु माधवजल्पम० १४९
भवत्युदयतीश्वरे सुहृदि २५२
भवद्भिरतिहेतून् कुर्वता २९६
भवबन्धच्छिदे तस्मै २३
भाण्डीरकक्षे बहुधा वितण्डां ३२६
भावोन्मत्तो हरेः किंचित् ७६
भीता रुद्रं त्यजति गिरिजा १००
भीमस्य चेदीशवधं विधित्सो १४२
भुक्तिं मुक्तिं हरिर्दद्यात् ४८
भूयोऽपि याचे देवेश ११
भूरिसाद्गुण्यभारेण १६२
भूयनुग्रहचितेन चेतसा २५८
भृत्यस्य पश्यति गुरूनपि ९७
भैरवं रुवति हन्त १९३
भोगैकसाधनजुषा १३७
भ्रातस्तनयं भ्रातु० २६७
भ्रूवल्लिताण्डवकला० २७९

( म )

मणिमयवरमण्डनोज्ज्वला० २१८
मण्डले किमपि चण्डमरीचे० १७८
मत्तुल्यो नास्ति पापात्मा ३८
मत्सेवया प्रतीतं ते २२
मथुरां च परित्यज्य ४७
मदचकुरचकोरीचारुता० २७७
मदनान्धतया त्रिवक्रया २१४
मद्वेषशीलिततनोः सुबलस्य ३१४
मद्वेषेण पुरः स्थितो हरि० २८५
मनोगतिरविच्छिन्ना ७६
मनो ममेष्टामपि गेण्डु० २३६
मन्दस्पन्दमभूत् क्लमै० २६८
मन्दस्मितं प्रकृतसिद्ध० ३२३
मम नामसदाग्राही ४८
ममाद्यामङ्गलं नष्टं २२२
ममार्चनापराधा ये ३३
ममैष कालोऽजित निष्फलो १४९
मया दृगपि नार्पिता १९१
मयि बल्गति भीमविक्रमे २९१
मरकतगिरेर्गण्डग्राव० १२५
मर्त्यो यथा त्यक्तसमस्त० ४४
मल्लश्रेण्यामविनयवतीं ११६
मल्लानां यदवधि पर्वतो० ३२३
मल्लानामशनिर्नृणां ११७
महाभागवतो जातः ६८
महेन्द्रमणिमञ्जुलद्युति० २३७
मां पुष्पितारण्यदिदृक्षया १८८
मां पूर्णपरमहंसं माधव १०७
मां स्नेहयति किमुच्चै० ८०
मा गर्वमुद्वह कपोलतले १६९
मातर्माद्रि गता कुतस्त्वमधुना २९८
माधुर्यादपि मधुरं ७०
माऽनयं भो कृथास्त्वां तु १५१
मानसेनोपचारेण ४२
मा मुञ्च पञ्चशर २७८
माहात्म्यज्ञानयुक्तस्तु ७६
मित्रानीकवृतं गदायुधि ३१५
मिलितं हरिमालोक्य १४२
मिलितः शम्बरपुरतो २३६
मिलितमधिष्ठितगरुडं २३६
मिहिरदुहितुरुद्यद्वञ्जुलं ३१३

मुकुन्दचरितामृतप्रसर० १४६
मुकुन्दमाविष्कृतविश्व० १५९
मुकुन्दलिङ्गालयदर्शने ५६
मुकुन्द विरहेण ते १६२
मुकुन्दो गान्दिनीपुत्र २५२
मुकुन्दोऽयं चन्द्रावलि० ३१४
मुक्तानामपि सिद्धानां २३
मुखं चन्द्राकारं करभ० ८४
मुखं ते दीर्घाक्षं मरकत० १२७
मुखपुटकृतपादाम्भो० २५१
मुखबाहूरुपादेभ्यः १६
मुद्रां भिनत्ति न रदच्छद० २३५
मुनिवरनृपवर्यसंकुले १०२
मुरमथन पुरस्ते को भुजङ्ग० ३०५
मुरलीखुरलीसुधाकिरं १३३
मुषाण दधिमेदुरं विफ० २८५
मुहूर्तं वा मुहूर्तार्द्धं ३७
मूर्द्धन्याहुकशासनं प्रणयते २१७
मृत्युस्तस्करमण्डले ८७
मोक्षसालोक्यसारूप्यान् २
मोहस्तन्द्रा भ्रमो रूक्ष० ११४
मोहितः शिशुहृतो पिता० १०६
मौलिश्चन्द्रकभूषणो मर० २३०
म्लानाननः कृष्णमवेक्ष्य १४७

( य )

यं समस्तनिगमाः परमेशं ३१७
यं सुष्ठु पूर्वं परिचर्य ८९
य एषां पुरुषं साक्षाद् १६
यः करोति महीपाल ४८
यः पुण्डरीकेक्षण तिष्ठतस्ते २६८
यच्च व्रजन्त्यनिमिषा ११९
यजन्ति यज्ञं क्रतुभि० २९३
यज्ञस्य भङ्गादतिवृष्टि० १३९
यत्कर्मभिर्यत्तपसा ५४
यत्नेनापादितोऽप्यर्थः १४
यत्पादपङ्कजपलाश० १०
यत्पादपांसुर्बहुजन्म० २५६
यत्पादसेवाभिरुचि० ३७
यत्र यत्र विषये मम ३२२
यत्सेवया भगवतः ४७
यथाऽग्निः सुसमिद्धार्चिः ८
यथा दामोदरो भक्त० ४८
यथा मरिचखण्डादे० १९५
यथा विधिनिषेधौ तु २८
यदण्डमण्डान्तरगोचरं च १०५
यदवधि मम चेतः कृष्ण० १९४
यदवधि मम शीता वैणि० ५२
यदुनन्दन निन्दनोद्धतं ३१५
यदुभिरयमवध्यो म्लेच्छ० ९०
यदुसदसि सुरेन्द्रैर्द्रागुप० २३४
यदृच्छया मत्कथादौ १७
यदृच्छया लब्धमपि २३
यद्धर्मसूनोर्बत राजसूये ८६
यद्यदिष्टतमं लोके ४५
यद्यप्यसौ पार्श्वगतो रहो० १०४
यन्नामधेयश्रवणानुकीर्तनाद् ९
यन्मर्त्यलीलौपयिकं ११०
यर्ह्यम्बुजाक्षापससार भो १०१
यशोदा च महाभागा २६४
यशोदा वर्ण्यमानानि २६७
यष्टिं हस्तत्रयपरिमितां २४७
यस्तूत्तमश्लोकगुणानु० ४१
यस्मिन् दिने प्रसूतेयं ४८
यस्य प्रभा प्रभवतो जग० १०५
यस्य यत्सङ्गतिः पुंसो ५०
यस्याः स्वभावमधुरां परि० १५३
यस्यानुरागप्लुतहासरास० १३७
यस्यास्ति भक्तिर्भगवत्य० ११
यस्यैकनिश्वसितकालमथा० ११५
याचते बत विधातरुदस्रा २६८
याचितः पटिमभिः स्यम० १९३

याते राजपुरं हरौ मुख० २६७
या दृष्ट्वा निखिलाघसङ्घ० ४६
यानारूढं पुरः प्रेक्ष्य० ३६
यानि योधैः प्रयुक्तानि ९१
या निर्वृतिस्तनुभृतां तव २०
यान्यक्षिपन्प्रहरणानि भटाः २८८
यावता स्यात्स्वनिर्वाहः ३२
यावद्वालक्ष्यते केतु० १६१
या वै लसच्छ्रीतुलसी० ३२
यास्याम्यस्य न भीषणस्य २८३
युवतीनां यथा यूनि ३८
यूयं नृलोके बत भूरिभागा १४
ये कण्ठलग्नतुलसीनलिना० ३५
ये कुर्वन्ति सदा भक्त्या ४२
येन जन्मसहस्राणि ५०
येनार्चितो हरिस्तेन १०
ये भक्तिप्रभविष्णुता० ११९
ये मे भक्तजनाः पार्थ ४७
येषां षोडश पूरिता दशशती ९५
येषां संस्मरणात् पुंसां ४७
यो दुस्त्यजक्षितिसुत० २१
यो दुस्त्यजान् दारसुतान् ६९
यो नृत्यति प्रहृष्टात्मा ३५
यो नो जुगोप वनमेत्य १०४
यौधिष्ठिरं पुरमुपेयुषि २२९

( र )

रक्षिते व्रजकुले बकारिणा १४१
रघुवर यदभूस्त्वं तादृशो ९४
रचयति निजवृत्तौ पाशुपाल्ये २५४
रताः किल नृपासने क्षितिप० १६८
रत्नालंकारभारस्तव ९८
रथात् तूर्णमवप्लुत्य २३०
रथेन सह गच्छन्ति ३६
रथस्थं ये निरीक्षन्ते ४०
रम्यापिङ्गपटमङ्गरोचिषा २१८
रसानां समवेतानां ३१५
राक्षसीं निशि निशाम्य १७९
रागः सप्तसु हन्त षट्स्वपि ८४
रागडम्बरकरम्बितचेताः १३३
राजन् पतिर्गुरुरलं भवतां १२
राज्ञामगाधगतिभिर्मग० ९६
राधा पुनातु जगदच्युत० १५७
राधा शान्तिरिवोन्निद्रं ३१९
राधासन्देशवृन्दं कथयति २४३
रिपुरपि यदि शुद्धो मण्ड० ९५
रुक्मिणीकुचकाश्मीर० ३२०
रुदितमनुनिशम्य तत्र गोप्यो १९२
रुन्धन्नम्बुभृतश्चमत्कृतिपरं १०९
रुषा ज्वरितबुद्धिना भृगु० २२३
रोदबिन्दुमरन्दस्यन्दि० ७०

( ल )

लक्ष्मीपयोधरोत्सङ्ग० २९३
लग्नस्ते नितरां दृशोरपि २८५
लेलिह्यमानं वदनैर्ज्वलद्भि० १७५
लोहितायति मार्तण्डे १७०
लौकिकी वैदिकी वापि ४५

( व )

वंशी पूरेण कालिन्द्याः १७०
वत्सस्य हन्त शरदिन्दु० २६७
वत्सैर्वत्सतरीभिश्च २५६
वदनकमलं पुत्रस्याहं २६८
वनभ्रमणकेलिभिर्गुरुभि० २४१
वन्दे कुड्मलिताञ्जलि० २५५
वपुरादिषु योऽपि कोऽपि वा ४५
वयस्य गोष्ठ्यामखिले० २४४
वरं देव मोक्षं न मोक्षावधिं २३
वरं हुतवहज्वाला० ३२
वरामभ्यासीनस्तटभुवि ११६
वसन्तकुसुमैश्चित्रं १६२

वाग्भिः स्तुवन्तो मनसा ६९
वाचा सूचितशर्वरीरति० ११२
वाढं निविडया सद्यः १५४
वामस्ताभरसाक्षस्य ८७
वाराणसीनिवासी १४६
वासः पिङ्गं बिभ्रतं शृङ्गपाणिं २४३
वासः संप्रति केशव क भवतो ९०
विचलदलकरुद्धभूतटी० २६१
विजयरथकुटम्बिना विना २२९
विजयिनमजितं विलोक्य ३१९
विज्ञानसुषमाधौते ३२२
विज्ञाय तावुत्तमगाय० १३२
वितायमानैर्भवता मखोत्करै० ९६
विदूरान्माराग्नि हृदय० १२२
विधत्ते राधायाः कुच० ११८
विधुरितवदना विदून० १८०
विनयमधुरमूर्तिर्मन्थर० ११३
विना भवदनुस्मृतिं विरह० २५५
विन्दन् विद्यादीपिकां स्वस्व० १७१
विन्यस्तश्रुतिपालिरद्य २६५
विप्राणां नस्तथा तृप्ति० १६१
विभाव्यते हि रत्यादिः ७९
विमुञ्च पृथुवेपथुं विसृज २३५
विमोच्यार्गलाबन्धं ३१९
विरमदलघुकण्ठोद्घोष० १६०
विरम विरम मातः पूत० ३०६
विरहज्वरसंज्वरेण ते २५५
विरहान्मुरविद्विषश्चिरं २२९
विराजन्ते यस्य व्रजशिशु० २९८
विलसन्तमवेक्ष्य देवकी १७९
विलोक्य रङ्गस्थललब्ध० २६९
विलोक्य श्याममम्भोद० १६४
विलोचनसुधाम्बुधे० २२६
विशाल विसिनीदलैः २४२
विश्रान्तषोडशकला ३१८
विश्वरूपधरमद्भुताकृति १४०
विश्वेषामनुरञ्जनेन जनय० २७७
विषमपि सहसा सुधा० २३६
विष्णुं प्रदक्षिणीकुर्वन् ३६
विष्णुर्नित्यमुपास्यते सखि० २५८
विस्तीर्योत्तरलितहारमञ्ज० १५२
विस्तृतकुमुदवनेऽस्मिन् १३४
विहरति वने राधासाधा० २८१
विहससि कथं हताशे १४१
वीरम्मन्यमदप्रहारि हसितं १११
वृद्धे त्वं वलिताननासि २८६
वृन्दारण्ये समन्तात् २४६
वृन्दावने तु गोविन्दं ४०
वृन्दावनेन्द्र भवतः परमं १५३
वृन्दावने वराभिः स्तुतिभि० ९४
वेदानुद्धरते जगन्निवहते १०८
वैणवध्वनिभिरुद्भ्रमद्भियः १३४
वैष्णवानि च शास्त्राणि ४६
वैष्णवानि तु शास्त्राणि ४६
व्यक्तालक्तपदैः कचित् १२४
व्यामोहाय चराचरस्य १६६
व्रजनिजवलभीवितर्दिका० २४९
व्रजपतिरिह सूनोर्जातकार्थे २९३
व्रजपतिसुतमग्रे प्रेक्ष्य १५२
व्रजयुवतिषु शौरिः शौरसेनीं ८७
व्रजराज्ञि रथात् पुरो हरिं १४०


( श )


शङ्खचूडमधिरूढविक्रमं १४०
शंसन् धूर्जटिनिर्जयादि० २१६
शक्तः किं नाम कर्तुं स १८०
शक्तास्मि मानसवितुं २४४
शङ्के चिरं केशवकिङ्करस्य १३५
शङ्के नीताः सपदि दशम० ५१
शङ्के प्रेमभुजङ्गेन १३५
शङ्खचक्राङ्किततनुः ४७

शनैरथोत्थाय विमृज्य लोचने १४०
शम्बरः सुमुखि लब्ध० २३६
शम्भुर्वृषं नयति मन्दर० १२८
शरज्ज्योत्स्नीतुल्यः कथ० ९२
शिखण्डकृतशेखरः फण० २६२
शिम्बीलम्बिकुचासि २८६
शिरसि नृपतिर्द्रोगग्रासीद० २३८
शिशोः श्यामस्य पश्यन्ती १३८
शुण्डाकारं प्रेक्ष्य मे बाहुदण्डं २९१
शुद्धान्तान्मिलितं वाष्परुद्ध० २२५
शृङ्गं केलिरणारम्भे १३९
शृण्वति तुरगदानवं रुषा ३०६
शोकामर्षादिभिर्भावै० ३३
श्यामाकृतिः स्फुरति चारु० २०६
श्रीकृष्णगाथां गायन्ती ७५
श्रीकृष्णस्तवरत्नौघै० ३९
श्रीदामदोर्विलसितेन १८८
श्रीदाम्नः पृथुलां भुजामभि २४२
श्रीविष्णोः श्रवणे परीक्षिद० ५६
श्रीविष्णोरर्चनं ये तु ३७
श्रुतदेवोऽच्युतं प्राप्तं २२१
श्रुतमात्रोऽपि यः स्त्रीणां १०१
श्रुतिस्मृतिपुराणादि० ३१
श्रुत्वाच्युतमुपायान्तं १५५
श्रुत्वा हन्त हतं त्वया १५८
श्वेतीकृताखिलजनं १४१
श्वोभाविनि त्वमजितो० १७०

( ष )

षट्पञ्चाशद्यदुकुलभुवां १०२

( स )

संक्रान्तधातुचित्रासुरतान्ते १७०
संग्रामकामुकभुजः स्वयमेव २९२
संरम्भप्रकटीकृतप्रतिभटा० २८९
संवत्सरं वा षण्मासान् ३१
संसारमरुकान्तार० ३६
संसारसर्पसंदष्ट० ४१
स इन्द्रसेनो भगवत्पदा० २२१
स एष वैहासिकताविनोदै० ३१८
सखिप्रकरमार्गणानग० २९०
सखि मधु किरतो निशम्य ३२४
सखेलमाखण्डलपाण्डुपुत्रौ ९१
सख्युः प्रियस्य विप्रर्षे० ९९
सगद्गदपदैर्हरिं हसति २४३
सगंध भजन्ति हरिणा मुख० २३३
स जयति शम्बरदमनः २३३
सतर्णकं डिम्भकदम्बकं १५३
सतां प्रसङ्गान्मम वीर्य० ६७
सत्यं शौचं दया क्षान्तिः ८२
सन्ति यद्यपि मे प्राज्या १०८
सप्तिः सप्ती रथ इह रथः १५७
सभाजयित्वा तमनङ्गदीपनं १६३
समक्षमक्षमः प्रेक्ष्यः २३१
समजनि दशा विश्लेषात्ते २२९
स मनागपचीयमानमध्यः २६२
सममुरुकरकाभिर्दन्ति० १५६
समस्तगुणवर्जिते करणतः २०७
समाधौ योगिनस्तस्मिन्० २०९
स मृग्यः श्रेयसां हेतुः ३१
सरसाः सरसीरुहाक्षवेषा० २१६
सर्वधर्मान् परित्यज्य २८
सर्वपापप्रशमनं ३२
सर्वमङ्गलमूर्द्धन्या ६८
सर्वमाधुर्यसाराणि ४२
सर्वाविद्याध्वंसतो यः २१०
सर्ववेदान्तसारं हि ४६

( स )

सर्वापराधकृदपि ३३
सर्वार्थिनां वाढमभीष्ट० ९५
सर्वेऽधिकारिणो ह्यत्र २७
सर्वे नित्याः शाश्वताश्च ११४

सर्वोपाधिविनिर्मुक्तं ८
सवनशस्तदुपधार्य १०९
स वै मनः कृष्णपदारविन्द० ५६
सहचरनिकुरम्बं भ्रात० २४०
सात्राजितीसदनसीमनि १६३
सा स्वञ्जसा हरेर्भक्ति० ४८
साम्येन भीतिविधुरेण २३८
सा रसव्यतिकरेण विहीना १५१
सालोक्यसार्ष्टिसामीप्य० २०
सिक्ताप्यश्रुजलोत्करेण ११९
सिद्धयः परमाश्चर्या ११
सिद्धलोकास्तु तमसः ५९
सुतमङ्गुलिभिः स्नुतस्तनी १८८
सुबल भुजभुजङ्गं न्यस्य १३२
सुरर्षे विहिता शास्त्रे १६
सुरैस्त्रिपुरजिन्मुखैरपि २५२
सुहृदित्युदितो भिया ३२३
सुहृदो नहि यात कातरा २४९
सेनान्यं विजितमवेक्ष्य ३१४
सोत्कण्ठं मुरलीकलापरि० २२०
सोऽहं परस्य सुहृदः परदेव० ३८
स्खलन्नयनवारिभिर्विरचि० ९७
स्तोतव्या यदि तावत् सा १४९
स्तोत्रैः स्तवैश्च देवाग्रे ३९
स्थानाभिकामस्तपसि २९४
स्थूलस्तालभुजोन्नतिर्गिरि० १५७
स्पृष्ट्वा विष्णोरधिष्ठानं ४०
स्पृहयति करिशुण्डादण्ड० १२४
स्फुटं श्रितवतोरपि श्रुति० २२६
स्फुटश्चमत्कारितया २७५
स्फुरति मयि भुजङ्गी० १६८
स्फुरदतनुतरङ्गावर्द्धिता० २४४
स्फुरदरुणदुकूलं जागुडै० २४९
स्मरन् प्रभुपदाम्भोजं ३१२
स्मर्तव्यः सततं विष्णु० १६
स्मृते सकलकल्याण० ४१
स्मेरां भङ्गीत्रयपरिचितां ५१
स्मेरास्यः परिहितपाटला० १२८
स्यमन्तकं हन्त वमन्त० १५४
स्यमन्तकमहं हृत्वा १५०
स्वतातशिष्य्या स्फुट० २९१
स्वनिगममपहाय मत्प्रति० ९९
स्वपादमूलं भजतः प्रियस्य २९
स्वप्ने मयाद्य कुसुमानि १४९
स्वमातुः स्विन्नगात्राया १००
स्वयं त्वसाम्यातिशय० १०३
स्वयं पराजयं प्राप्तान् १६९
स्वर्गध्वंसं विधित्सु० ११६
स्वर्गापवर्गयोः पुंसां ३७
स्वविलोचनचातकाम्बुदे १३६
स्वसास्मि तव निर्दये ३१४
स्वस्मिन् धुर्येऽप्यमानी ३२१
स्वीकुर्वन्नपि नितरां यशः० ९४
स्वे स्वेऽधिकारे या निष्ठा २७

( ह )

हन्त देहहतकैः किममीभिः १४८
हन्त मे कथमुदेति सवत्से ८०
हन्त स्वकीयकुचमूर्ध्नि ३०३
हरति शितिमा कोऽप्य० १२३
हरिकीर्तनजातविक्रियः १३३
हरिकेलिभुवां विलोकनं १३२
हरिचरणविलोकालब्धि० २२८
हरिनामाक्षरयुतं ३५
हरिपदकमलावलोकतृष्णा २२६
हरिभक्तिमहादेव्याः ११
हरिमवलोक्य पुरो भुवि २२२
हरिमुद्दिश्य भोग्यानि ३१
हरिमुद्दिश्य यत्किंचित् ३८
हरिरेव सदाऽऽराध्यः ३३
हरिलीलासुधासिन्धो० १६७
हरिवल्लभसेवया सम० १८६
हरौ रतिं वहन्नेष ७०

हरौ श्रुतिशिरःशिखा० ३०२
हस्तमुत्क्षिप्य यातोऽसि १५३
हस्तोदरे विनिहितैक० २८१
हा किं करोमि तरलं ३०५
हित्वास्मिन् पिशितोपनद्ध० ३१२
हृदयाम्बरे ध्रुवं ते २०९
हृष्टः कम्बुपतिस्वनै० २१०
हृष्यत्तनूरुहो भाव० १४०
ह्नियमघहर मुक्त्वा २२७

